Bombay Sanskrit & Prakrit Series No. XLIX

# NYĀYAKOS'A

OR

## DICTIONARY OF TECHNICAL TERMS

OF

## INDIAN PHILOSOPHY

BY

MAHĀMAHOPĀDHYĀYA BHĪMĀCĀRYA JHALAKĪKAR

REVISED AND RE-EDITED BY

MAHĀMAHOPĀDHYĀYA VĀSUDEV SHĀSTRI ABHYANKAR,
PANDIT, FERGUSSON COLLEGE, POONA

PUBLISHED BY

The Bhandarkar Oriental Research Institute, Poona

1928

# तृतीयावृत्तौ प्रास्ताविकं किंचित् ।

न्यायशास्त्रगतानां पारिभाषिकशब्दानां विवरणं कुर्वतो न्यायकोशनाम्नोस्य ग्रन्थस्य तृतीयं मुद्रणमद्य संजातमिति नूनं महदेतत्प्रमोदकारणमद्य विद्वद्वृन्दानां न्यायादिविद्योत्कर्षाभिलाषिणां मनसि । महामहोपाध्यायैर्भीमाचार्यैरयं प्रथमं १८७४ मिते खिस्ताब्दे मुद्रितः । अनन्तरं तैरेव १८९३ मिते खिस्ताब्दे द्वितीयं मुद्रणं कृतम् । प्रतिमुद्रणं समुपचीयमानशब्दार्थाद्यवयवोयं ग्रन्थः शरीरवृद्धिं शरीरदार्ढ्यं च धारयन्नवलोक्यते । प्रथमावृत्तावस्मिन्ग्रन्थे साधारणतश्चत्वारि शतानि शब्दानां (४००) संकलितान्यासन् । द्वितीयावृत्तौ शब्दसंख्या चतुर्गुणाधिका संजाता षडधिकैकशतोनसहस्रद्वयपर्यन्तं(१८९४) गता । शब्दविवरणमपि स्थले स्थले विस्तृततरं संजातम् । अस्यां तृतीयावृत्तौ द्वात्रिंशदूना सप्तशती ( ६६८ ) शब्दानामधिका संगृहीता । परिपूर्णा शब्दसंख्या चास्यां तृतीयावृत्तौ द्विषष्ट्यधिका पञ्चविंशतिशती ( २५६२ ) संजाता । अस्यां तृतीयावृत्ताववलोकनसौकर्यार्थमुपयुक्तताविवृद्ध्यर्थं चाधोनिर्दिष्टाः कतिपये विशेषाः संप्रयुक्ताः । द्वितीयावृत्तौ स्फुटभेदभिन्नानेकार्थानां शब्दानां प्रत्येकार्थपरिसमाप्तौ न पङ्क्त्यन्तरं कृतं केवलं १ । २ इति प्रकारेणाङ्कास्तत्र तत्र मुद्रिताः । तृतीयावृत्तौ चास्यां तथैव तादृशार्थसमाप्तिः पङ्क्त्यन्तरप्रयोजिका न कृता । तथा द्वितीयावृत्तावेकस्यैवार्थस्य बहुभिर्विधाभिः प्रतिपादने कर्तव्ये प्रत्येका विधा पङ्क्त्यन्तरेण [ क ] [ ख ] इत्याद्यक्षरान्तरेण चाङ्कितासीत्प्रस्तुतायां मुद्रणावृत्तावेकस्यैवार्थस्य प्रतिपादिका भिन्ना विधाः [ क ] [ ख ] इत्याद्यक्षरैरेवाङ्किताः न पङ्क्त्यन्तरैः । लेशमात्रेऽर्थभेदेपि च न पङ्क्त्यन्तरं कृतं किंतु [ क ] [ ख ] इत्याद्यक्षरचिह्नानि तत्रापि प्रयुक्तानि । अवलोकनसौलभ्यार्थमधःस्थिताष्टिप्पणीस्तत्र वर्तमानानि च भिन्नभिन्नानि चिह्नानि दूरीकृत्य शब्दविवरणेष्वेव टिप्पणीस्थितोर्थराशिः संगृहीतः । स्थले स्थले भाषाया दुरवबोधतां दूरीकृत्य भाषासौलभ्यं संपादितम् । अस्मिंस्तृतीयावृत्तिसंपादने वर्षत्रयपर्यन्तं सुमहान्परिश्रमः कर्तव्यतया पतितः ।

अस्मच्छिष्यैरिदानीं रत्नागिरीस्थसंस्कृतपाठशालाध्यापकैर्जोशीत्युपाह्वैर्दिगम्बरशास्त्रिभिरस्मत्सकाशात्सुमहान्तं श्रमभारं स्वीकृत्य महानुपकारभारोऽस्मासु प्रतिनिवेशितः। तथा च प्राच्यविद्यासंशोधनमन्दिर-(भाण्डारकर ओरिएण्टल रिसर्च इन्स्टिटयूट् )नाम्न्या संस्थयापि महान्तं द्रव्यव्ययमङ्गीकृत्य विद्वांस उपकृता एतस्य कोशस्य तृतीयावृत्तिसंपादनेनेत्यत्राप्यन्ते निवेदनीयमेवेति मन्ये—

अभ्यंकरोपाह्व-वासुदेवशास्त्री ।

---

# तृतीयावृत्तावुपोद्धातः ।

१ कोशाभिधया प्रसिद्धेषु ग्रन्थेषु न्यायशास्त्रविषये न्यायकोशो नाम प्रस्तुतो ग्रन्थ एक एव दृष्टिपथमवतरति । यस्मिन्कस्मिन्नपि दर्शने शास्त्रे वा यावत्कालपर्यन्तं न लिखिता बहवो ग्रन्था न परिभाषाः सांकेतिकाः शब्दा वा विस्तरेण विवेचिता न वा विरचितानि चर्चारूपाणि विवरणानि न च प्रणीता वृत्तयो विवृतयष्टीकाश्च न चापि प्रसृता विद्वद्गोष्ठीषु विवादास्ताव-त्कालपर्यन्तं प्रायो न वर्तते कोशग्रन्थानां रचनावसरस्तस्मिन्विषये इति तु लोके बहुशो वयं पश्यामः । प्रतिपाद्यविषयस्य विस्तारस्तस्य च सप्रपञ्चं नैकविधया रीत्या स्थाने स्थाने विवेचनं द्वयमेतत्कोशनिर्माणावसरदाने प्रायः प्रयोजकम् । अत एव बहुभिर्लोकैः प्रयुज्यमानायां भाषायां ये शब्दाः प्रत्यहं प्रयुज्यन्ते तेषां कोशाः प्रथमं प्रणीयन्तेऽनन्तरं विशिष्टानां नामा-ख्यातादीनामपरेषां च शब्दानां कोशाः प्रणीयन्ते तदनन्तरं च वेदादिवि-शिष्टविषयेषु प्रयोगवैशिष्ट्यमर्थवैशिष्ट्यं वा प्रतिदधानानां शब्दानां कोशा निर्मीयन्ते । प्रत्यहं विस्तारमुपगच्छत्सु शास्त्रार्थविषयेषु समुपजायमानतया शब्दार्थविशेषबाहुल्यस्य, मर्यादिततया च मानुषस्य मनसो धारणाशक्तेर्बु-द्धेश्च विषयाकलनशक्तेर्यथा यथा वृद्धिं समुपयान्ति शास्त्रार्थविषयास्तथा तथा प्रगुणीभवति प्रयोजनमपि कोशादिग्रन्थानाम् । शास्त्रग्रन्थोपस्थितिं प्रति प्रतिदिनमधिकतरं जायमानोनादरोपि बद्धादरं कोशादिकपर्यालोचने कुरुते जनमित्यपि प्रत्यक्षीकुर्महे ॥

२ पर्यालोच्यमानायामुपरिनिर्दिष्टायां विचारसरण्यामेतावत्कालपर्यन्तं न्या-यशास्त्रे परिदृश्यमानस्य कोशग्रन्थाभावस्य हेतुरपि सुतरां प्रतीतो भवति । पुरातने काले यस्मिन्कस्मिन्नपि सांख्ययोगादौ मीमांसाव्याकरणादौ वा शास्त्रे पारंगततामुपेयुषां पण्डितप्रवराणां न्यायशास्त्रगतैस्तर्कदीपिकामुक्ताव-लीचिन्तामण्यादिभिः प्राथमिकैर्ग्रन्थैः परिचयस्य नितरामावश्यकतया संपा-दितत्वात्सांख्ययोगशास्त्राध्ययनाध्यापनादिकर्मणि व्यापृतानाममीषां न्याय-

शास्त्रान्तर्गताः प्रत्यहं समुपयुज्यमाना ग्रन्थेषु च समुपलभ्यमानाः परिभाषाः संज्ञाश्च जिह्वाग्र एवावर्तन्तेति न तदानीं स्वल्पमपि प्रयोजनमासीन्न्यायशास्त्रविषये कोशादिग्रन्थनिर्माणस्य । न्यायशास्त्रपारदृश्वनामधीतसाङ्गसशिरस्कन्यायवैशेषिकदर्शनग्रन्थानां जिह्वाग्रसमुपस्थितप्रधानग्रन्थशास्त्रार्थविषयाणां प्रतिक्षणक्रियमाणगहनविषयविभावनासंजनितशेमुषीसंस्काराणां नैयायिकपण्डितप्रकाण्डानां न काचिदप्यावश्यकतासीन्न्यायशास्त्रविषये कोशग्रन्थावलोकनस्य कोशग्रन्थविरचनस्य वा । अपरं च न कस्यापि विषयस्य न वा कस्यापि वर्णनस्य कोशग्रन्थेषु प्रतिभापरिप्लुतो नवीनतयोपन्यासः कर्तुं पार्यत इति नूनमनादर एवासीत्प्राचीनानां पण्डितानां कोशरचनकर्मणि चर्वितस्यैव पुनश्चर्वणप्रणयिनि । इदानींतनास्तु शास्त्राध्येतारः स्वयमधीयमानशास्त्रगतानपि न सर्वान्प्रमाणभूतान्ग्रन्थान्साकल्येनाधीयाना दृश्यन्ते, दूरत एव वार्तेतरशास्त्रगतानां प्रमुखग्रन्थानामध्ययनस्य । अनधीत्य प्रमाणभूतान्पञ्चषानपि शास्त्रग्रन्थानधुना त्वरिताः शास्त्रपण्डिता भवन्ति ये स्वयमधीतानामल्पसंख्याकानां ग्रन्थानामध्ययनमपि न सर्वाङ्गीणतया कुर्वन्ति न पङ्क्तिशः पाठान्गृह्णन्ति न च मुखप्रोक्तं ग्रन्थं कुर्वन्ति । सर्वथाध्ययनार्थं स्वीकृतस्यापि शास्त्रस्य ग्रन्थेषु सम्यगुपस्थितिरहितानामितरशास्त्रेष्वालोडनं चिकीर्षूणामिदानींतनानामध्यापकानामध्येतॄणां च सम्यग्ग्रन्थानुपस्थितौ तेषु तेषु स्थलेषु परिदृश्यमानानां शास्त्रीयपरिभाषाणां संज्ञानां च सम्यगवबोधाय मुहुर्मुहुः कोशदर्शनावलम्ब एव कर्तव्यतयापतति । यथा यथा ग्रन्थोपस्थितिराहित्यं विवर्धते तथा तथा न केवलं कोशादिग्रन्थावलोकनं प्रत्यनन्यगतिकतयाधिकाधिका प्रवृत्तिर्भवति किं तु कोशसदृशग्रन्थराहित्ये स्वाभीप्सितग्रन्थाध्ययनकर्मण्यमीषां संचारो दृगन्धानामिव भवति राजवर्त्मनीति यदि ब्रूमस्तर्हि तत्र नातिशयोक्तिलेशस्याप्यवकाशः ॥

२ सागरवदतिगभीरेषु तेषु तेषु शास्त्रेष्ववगाहनं कृत्वा तत्तच्छास्त्रगतानां बहुविधानां विषयाणां सूक्ष्मार्थानां च सम्यगाकलनं कृतवतां पण्डितानामिदानींतने काले प्रतिदिनं परिजायमानं दौर्लभ्यं समीक्षमाणा मन्यामहे यथा—"देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरा-

मसौ गुरुकुलक्लिष्टो मुरारिः कविः । अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः" इत्यादिका मुरारिकवेर्दर्पोक्तिर्नूनमुक्तेरतिशयं परित्यज्याधुना परिदृश्यमानयथार्थस्वरूपा संजातेति । स्मरामो वयं केवलं तस्य कालस्य यदा गुरोः समीपेधीयानोधस्ताट्टिप्पण्याङ्कितं ग्रन्थमुपयुञ्जानः शिष्यो यथा सर्वेषां सहाध्येतॄणामवमानपात्रमासीद्यथा चोपस्थितेरभावे कोशादिग्रन्थानामवलोकनं कुर्वाणः सब्रह्मचारिणामुपहासभाजनमजायत । गुरवोपि ते गता व्याकरणादिशास्त्रपारयिष्णवो येषां भाष्यादिग्रन्थाक्षराणि मनश्चक्षुषः पुरतो हस्तामलकवत्स्फुरन्ति समवर्तन्त । बहूनां व्याकरणोपाध्यायानामधुना पाणिनीयाष्टाध्यायीस्थसूत्राण्यपि न क्रमेण मुखोद्गतानि समुपलभ्यन्ते दूरत एव कथा वार्तिकानां भाष्यपङ्क्तीनां वा । दैवदुर्विलसितप्रभावेण संजातस्येदानींतनस्य न्यायशास्त्राध्ययनह्रासस्य संसूचिकामेतादृशीमवस्थां प्रत्यक्षीकुर्वन्तो नैयायिकाग्रेसरा भीमाचार्या न्यायशास्त्राध्ययनं कुर्वाणानां शिष्याणामध्यापनं च कुर्वतां गुरूणामुपयोगाय न्यायशास्त्रगतानां सांकेतिकानां शब्दानां कोशं न्यायकोशाभिधं व्यरचयन् ॥

४ कोशादयो ग्रन्थाः प्रायशः शास्त्रं प्रविविक्षूणां शास्त्रपारंगतानां गुरुचरणानां समीपे पाठं ग्रहीतुमशक्नुवतां बालानामेव बहुश उपयोगार्थं प्रणीता भवन्ति । एकस्मिञ्शास्त्रे कृतप्रवेशानां स्वातन्त्र्येण गुर्वनपेक्षयेतरशास्त्रप्रवेशकर्म कुर्वाणानामपि जनानां यथावकाशमेतेषामुपयोगो भवति । कृतविविधशास्त्रालोडनानां स्फुरच्छास्त्रग्रन्थोपस्थितिकतयाहर्निशं कृततत्तच्छास्त्रगतकठिनविषयविभावनानां बुद्धिवैभवशालिनां प्रतिभासंपन्नानामुपाध्यायानां न कोशग्रन्थैः किमपि फलं संपादितं भवति किंतु कोशग्रन्थसांनिध्यं तस्य मुहुर्मुहुरुपयोगकर्म चैते स्वसंपादितायाः शास्त्रोपस्थितेर्मालिन्यमेव संपादयतः । समागते चोपस्थितिमालिन्ये शास्त्रार्थानामहर्निशं मनसि प्रचलिता चर्वणापि श्लथा भवति । श्लथायां तस्यां स्फुरदपि प्रतिभावैभवं प्रसरकर्मण्यवकाशाभावादकिंचित्करं भवति । हीयमाने च प्रतिभावैभवे नव-

नवा विचाराः सिद्धान्ताश्च न मनसः पुरतः प्रकटीभवन्ति । नष्टेषु च तेषु तत्तच्छास्त्राणां प्रगतिरपि मन्दा भवतीति महत्येषानर्थपरंपरा ॥

५ नैकविधेष्वाध्यात्मिकेषु भौतिकेषु च शास्त्रेषु प्रतिदिनं वर्धमानया ग्रन्थसामग्र्या नवनवैरुत्पद्यमानैः प्रतिभाविलासैः प्रगुणीभवद्भिश्च कल्पनातरङ्गैर्देशान्तरनिवासिनां धर्मान्तरानुयायिनां विदुषां विविधैश्च विचारैस्तथा नितरामिदानीं समुपचितो ज्ञानराशिर्यथा सुमहता यत्नेन दीर्घकालमधीयानेन बुद्धिविभवशालिनापि जनेन न सर्वासु प्रधानासु कलासु न वा सर्वेषु प्रधानेषु शास्त्रेषु प्रतीष्टः प्रवेशः कर्तुं पार्यत इति यद्यपि यथार्थमेव तथापि नैतावता प्रमाणभूतानां प्राचीनग्रन्थानां माहात्म्यमुपयुक्तता वा परिहीयते । "भिन्नभिन्नानां शास्त्राणां भिन्नभिन्नेषु कोशग्रन्थेषु प्रतिक्षणं शास्त्रेषूपलभ्यमानानां शब्दानामुपयुक्ता विस्तृता अर्था व्याख्यानानि च निवेशयितव्यानीति न किमपि प्रयोजनं ग्रन्थानां पङ्क्तिशोध्ययनेन पाठकरणेन वा निरर्थकशरीरकृशीकरणहेतुना, यदा यदा तु केनापि पारिभाषिकेण संज्ञाशब्देन वा प्रयोजनं तदा कोशग्रन्थेषु तस्यार्थविस्तरोवलोकनीयः" इति यः कोपि जनो ब्रवीति चेद्ब्रवीतु नाम, वयं तु मन्यामहेहर्निशमुपयुज्यमानाः प्रधानाः संज्ञाशब्दाः परिभाषाश्च शास्त्रग्रन्थानामध्ययनमध्यापनं वा कुर्वद्भिर्जिह्वाग्रे एव धारणीयास्तेषामर्थः स्वारस्यं विवरणं चैतानि मनसा सततं विभावनीयानि न तदर्थं कोशादिग्रन्थानामवलोकनं करणीयम् । विशेषतो न्यायव्याकरणादिशास्त्राणां गीर्वाणवाणीलिखितसकलग्रन्थानां परिभाषाः संज्ञाश्च तथा दुर्बोधा गहनार्थाश्च वर्तन्ते यथा प्राथमिकानां ग्रन्थानामध्ययनं विना केवलं कोशग्रन्थादिसाहाय्येन तदर्थावबोधं प्रति क्रियमाणो यत्नो बधिरं प्रति क्रियमाणस्य विविधरसपरिप्लुतस्य सुरमणीयस्योदयनादिकथावर्णनस्य विस्तर इवाकिंचित्कर एव । संक्षेपतो वक्तव्ये कोशग्रन्थेषु वर्तमानाः संज्ञाशब्दाः परिभाषाश्च विदुषामापणस्थितभाण्डवत्परमार्थतोनुपयुक्ता एव वर्तन्ते इत्यस्मिन्वस्तुनि न कोपि विवादः ॥

काणां शब्दानां संज्ञाशब्दानां च परिपूर्णतया विवेचनं कुर्वतां कोशानां विरचनकर्मणि प्रतिदिनमधिकतरा विदुषां प्रवृत्तिर्भूयान्नचिराच्चैवंविधाः कोशाः प्रतिशास्त्रं प्रणीयेरन्नेको वा कृत्स्नकोशः सर्वशास्त्रावगाहको जनानां दृष्टिपथमवतरेदित्याशासे—

अभ्यंकरोपाह्व-वासुदेवशास्त्री ॥

---

# PREFACE TO THE FIRST EDITION

CONSIDERABLE attention has of late been directed to the Literature and Philosophy of the Ancient Hindus, and many efforts have been made to promote and facilitate their study. A number of Sanskrit poems, and works on grammar and on some of the other branches of ancient Hindu Science and Philosophy, have been published by learned scholars, but little or no help seems to have been afforded to the student of the Nyāyas'āstra or Hindu Logic. The study of that S'āstra, besides its own intrinsic uses both from a scientific and practical point of view, has the further merit of sharpening the mind of the student, and of accustoming it to close and accurate thinking; and the author is of opinion that, in this respect at any rate, the study of the Nyāyas'āstra deserves encouragement and assistance. To afford the latter, so far as was in his power, the author has composed this Nyāya Lexicon, under instructions from Dr. G. Bühler, formerly Professor of Oriental Languages in the Elphinstone College and at present Educational Inspector, Northern Division, and from Dr. F. Kielhorn, Superintendent of Sanskrit Studies in the Deccan College.

This Lexicon, it is believed, contains all the technical terms of Hindu Logic ( Nyāya ) occurring in the Aphorisms of Gautama, the Gādādharī, and other logical works enumerated in the annexed list. All these terms have been arranged in alphabetical order, and their meanings have been explained in a style as simple as the nature of the subject permitted, and also, it is hoped, with conciseness and perspicuity. In some cases illustrations have been added, mostly from the works above alluded to, but when those works did not furnish any, new ones have been framed.

It is scarcely necessary to say, that the technical terms of the Nyāya Philosophy are employed throughout our whole philosophical literature. Those who have any knowledge of the great works of our ancestors on the philosophy of grammar or even of the treatises on the Vedānta and other systems, need not be told to what extent this is the case. And therefore it is necessary even for those who may devote their attention to any other of our philosophical systems than the Nyāya fully to grasp the meaning of the Naiyāyika phraseology, The author's aim, therefore, in the preparation of this Lexicon has been to assist the student not only of the Nyāya Philosophy but of all our ancient philosophical systems.

The preparation of the Lexicon has been a work of great labour. The annexed list of the treatises consulted shows the extent of ground which it has been necessary to go over. And the further labour of selecting and digesting the material has not been very light. The author, therefore, can hardly hope that his work is free from imperfections and errors. For these he craves the indulgence of the reader. But he ventures to hope that the Lexicon will nevertheless be of some use to those for whose assistance it has been prepared, and if he should succeed, in any degree, in helping on the study of our ancient Philosophy, he will deem his labours amply rewarded.

*Bombay,* 
*December 1874.* 

BHIMACARYA JHALAKIKAR,
Sanskrit Teacher, Elphinstone College.

---

## PREFACE TO THE SECOND EDITION

The present edition of my Nyāyakos'a may almost be described as an entirely new work. The first edition, which was published in 1874, consisted of 267 pages only. The present work, although its contents have been put in as economical and abridged a form as possible, extends to over 1000 pages.

The work of preparing this edition has occupied me incessantly for the last eight years. The time may seem to some critics long. But I have during that long period given, on an average, nine hours daily to the task of improving my Nyāyakos'a and I will ask friendly critics to consider how responsible a task it is to prepare a work like the present, and to remember how obstructive old age is to continuous labour.

My book, as it is now presented to scholars, contains about four times as many technical words as were explained in the first edition. I have inserted all the peculiar words I have met with in the course of my reading since 1874, which I carefully noted down in accordance with the proverb संग्रहः खलु कर्तव्यः कदाचित्फलदायकः. My earnest hope is that the notes and explanation I have given here of words not explained in the ordinary kos'as will bear witness that my toil has been both great and fruitful; and that my book will be of service to those who wish to make a real study of the six systems of the philosophy of my country.

I have made a careful and life-long study of all books on Nyāya and Vais'eṣika to which I have had access. I regret that I have not been fortunate enough to obtain access to all the books on those two systems that are known to exist. But, as it is, I hope my book will show that it is based on careful study of the works of the masters of old days, and that it was worth doing if the knowledge of the systems of these masters is not to perish out of the land. It is not so complete as it might have been if I had not been left so much to the collection a poor man like myself was able to make; but my labours will bear fruit if readers of my work are encouraged to make additions from their own reading to it.

The knowledge of Sanskrit is, comparatively speaking, dying out in India before the advance of English. A work written, as this is, wholly in Sanskrit is not so much respected and cared

for as if the explanations had been put in English. Even our own countrymen do not appreciate works written in Sanskrit until praise of them comes out of the West. I hope my book will seem praiseworthy to foreign scholars like Professors Bühler, Max Müller, Weber and Kielhorn, *but still more do I hope that my labours will prove of service to those, if they be only a few, whether Hindu or European, who are fellow-students with me of these old philosophies. This I shall look on as the fruit of my labours.

Those who find this book useful in their study of the old philosophies of India should know that they are under deep obligation to K. M. Chatfield, Esq., Director of Public Instruction, who has shown his appreciation of Nyāyakos'a by conferring on it this re-birth. I am greatly indebted to him for the opportunity he has given me of taking such place among the teachers of Nyāya as the learned world, after perusal of this book, may think fit to accord to me. My thanks are due also to my friend Dr. Peterson, who was good enough to recommend to Mr. Chatfield the publication of this second edition.

*Bombay, Elphinstone College, July 1893.*

Mahāmahopādhyāya,
BHĪMĀCĀRYA JHAḶAKĪKAR.

---

* I take this opportunity of thanking Professor Weber warmly for his review of my first Edition in the Literarisches Centralblatt wherein he says:—

"We have in this book a concise explanation, based on the chief work of the Nyāya Vais'eṣika systems, and justified in every case by full quotations and references, of all technical terms of these two systems in alphabetical order... It is a work of the greatest merit and industry, demanding as it must have done the complete mastery of a literature of more than ordinary extent and difficulty, which is, moreover, in many cases only accessible as yet in manuscripts, and the greatest judgment in selecting and arranging the material. We gladly tender our thanks to the author for the pains he has spent upon it."

# द्वितीयावृत्तीची प्रस्तावना

( In Marathi. )

१ ही जी न्यायकोशाची द्वितीयावृत्ति छापली आहे तीस द्वितीयावृत्ति न समजतां प्रथमावृत्तिच म्हणणें विशेष शोभेल. कारण इसवी सन १८७४ सालीं जेव्हां पहिल्यानें न्यायकोश छापण्यांत आला तेव्हां त्याचीं पृष्ठें सारीं २६७ झालीं होतीं. ह्या द्वितीयावृत्तीच्या वेळीं होईल तितकी काटकसर करून मोठ्याच संक्षेपानें हा ग्रन्थ छापला असतांनाही ह्याचीं पृष्ठें एक हजारावर झालीं आहेत. त्यावरून आतांचें न्यायकोशाचें स्वरूप पूर्वीपेक्षां फार भिन्न आहे असें वाचकांच्या सहज लक्षांत येईल.

२ ही द्वितीयावृत्ति छापण्याचें काम म्हणजे नवीन शब्दांचा समावेश करणें, नवीन मूळप्रत तयार करून देणें, लिखित प्रत शोधणें, व प्रूफशीटें तपासणें वगैरे; ह्या कामास इसवी सन १८८६–८७ सालामध्यें सुरुवात झाली. तें आज सुमारें ७।८ वर्षें एकसारखें चाललें आहे. आतां हें काम फार वर्षें चाललें आहे ह्मणून तें फार सुस्तपणानें चाललें आहे असें कोणास वाटेल. परंतु माझे इतर व्यवसाय संभाळून हा ग्रन्थ तडीस नेण्याकरितांच मी आज सात आठ वर्षें दररोज नऊ नऊ तास काम करीत आलों आहें. न्यायकोशासारखा ग्रन्थ करणें हें काम किती जोखिमीचें आहे व वार्धक्य हें अव्याहत परिश्रम करण्याला कसें प्रतिबन्धक होतें याचा विचार केला असतां हा ग्रन्थ सात आठ वर्षांत पुरा झाला म्हणजे लवकरच पुरा झाला असें कोणालाही वाटण्यासारखें आहे.

३ इसवी सन १८७४ सालीं न्यायकोशाची प्रथमावृत्ति निघाली तेव्हांपासून निरनिराळीं शास्त्रीय पुस्तकें वाचतांना जे जे शास्त्रीय पारिभाषिक शब्द मजला आढळले त्या त्या शब्दांचा "संग्रहः खलु कर्तव्यः कदाचित्फलदायकः" या न्यायानें काळजीपूर्वक संग्रह करून ठेवून ते सर्व शब्द या कोशाचे प्रस्तुत आवृत्तींत गोंविल्यामुळें पहिल्या आवृत्तींतील न्यायकोशामध्यें जितक्या पारिभाषिक शब्दांचा समावेश झाला होता त्यापेक्षां चौपट जास्त पारिभाषिक शब्दांचा ह्या आवृत्तींत समावेश झाला आहे. ह्यांतील निरनिराळ्या शब्दांवर घेतलेलीं टिप्पणें, निर्णय, सिद्धान्त वगैरे

पाहून विद्वान् व शास्त्रमर्मज्ञ वाचकांस माझे मनोविचार व बुद्धिपरिश्रम यांची अप्रमेयता व अचंबा वाटेल; इतकेंच नाहीं तर शास्त्रीय ग्रन्थ वाचणारांस व त्याचा अभ्यास करणाऱ्यांस प्रस्तुत कोश फारच उपयोगी होईल असें त्यांना वाटल्यावांचून राहणार नाहीं. संस्कृत शब्दांचे जे कोश आज काल झाले आहेत ते सर्व फक्त काव्य पढण्याच्या उपयोगी आहेत, शास्त्र पढण्याचे उपयोगी नाहींत. म्हणून शास्त्रीय व लोकोपयुक्त असे शब्द शोधून घेऊन मीं हा जो न्यायकोश रचला आहे तो न्याय, वैशेषिक, पूर्वमीमांसा, उत्तरमीमांसा, सांख्य, व पातञ्जल ह्या सहाही शास्त्रांचें अध्ययन करणाऱ्यांस फार उपयोगी होईल अशी माझी पूर्ण उमेद आहे.

४ न्याय-वैशेषिक शास्त्रांवर असंख्य ग्रंथ आहेत, ते सर्व ग्रंथ माझ्या-सारख्या असहाय मनुष्याला मिळणें हें अवघड आहे. शिवाय जे ग्रंथ मिळणें शक्य होते ते ग्रंथ सुद्धां यत्न केला असतांनाही दुर्दैवानें मला मिळाले नाहींत, यामुळें व प्रस्तुत कोश रचण्याचे कामीं दुसऱ्या कोणाही विद्वानाची मजला मदत नसल्यामुळें सर्व शास्त्रीय ग्रंथ गोळा करून व त्यांतील शब्द काढून ते या न्यायकोशामध्यें घालावयास मजला सवड मिळाली नाहीं ह्याचें फार वाईट वाटतें. ह्यासंबंधानें आधुनिक विद्वानां-विषयीं एक विशेष खेदकारक गोष्ट मजला येथें सांगणें भाग पडतें, ती अशी कीं, प्राचीन विद्वान् लोकांस 'धर्मभोळेपणामुळें, लोभामुळें व मनाच्या कोत्या समजुतीनें आपले जुने ग्रंथ प्रसिद्धीस आणीत नाहींत' म्हणून हल्लींचे लोक नांवें ठेवितात व उपहास करितात. तरी नवीन विद्वानांमध्येंही असाच उणेपणा दिसून येतो. असो. आतां हा ग्रंथ सर्वथा परिपूर्ण आहे असें माझें मुळींच ह्मणणें नाहीं. कारण त्याला सर्व गोष्टींनीं परिपूर्णता असणें हें एका असहाय व्यक्तीला अशक्य आहे. व त्यांत मानसिक श्रम करण्याची कितीही उमेद असली तरी पुस्तकरूपी व इतर बाह्य मदती-शिवाय ती जितकी फलद्रूप व्हावी तितकी होणार नाहीं. तथापि हा ग्रंथ वाचून वाचकांना जर उत्साह वाटला व माझ्यापेक्षां जास्त मेहनत घेऊन ह्या ग्रंथांत भर घालण्याचें जर त्यांच्या अंगांत स्फुरण आलें तर माझे श्रमाचें कांहीं तरी चीज झालें असें म्हणण्यास हरकत नाहीं.

५ हल्लीं जिकडे तिकडे इंग्रजी भाषेचा प्रसार फार झाल्यामुळें संस्कृत भाषा ही ह्या भरतखंडामध्येंसुद्धां लुप्तप्राय झाली आहे. ह्मणून इंग्रजी भाषेमध्यें केलेल्या ग्रंथाचें जसें चीज होतें तसें संस्कृत भाषेमध्यें केलेल्या ग्रंथाचें होत नाहीं. जर प्रस्तुत ग्रंथ इंग्रजीमध्यें भाषांतररूपानें झाला असता तर त्यास किती महत्त्व आलें असतें याची वाचकांनींच कल्पना करावी. भरतखंडामध्यें प्रसिद्ध केलेल्या संस्कृत ग्रंथाच्या [एतद्देशीय आंग्लविद्याविशारद, प्रतिष्ठाकाम, विद्वन्मन्य, आधुनिक विद्वानांस] योग्यतेची व उपयुक्ततेची थोरवी पश्चिमदिशेकडून फडकत आल्याशिवाय दिसत नाहीं. करितां बर्लीन येथील प्रसिद्ध संस्कृतज्ञ प्रोफेसर वेबर आणि इतर संस्कृतज्ञ पाश्चात्य विद्वान् ह्यांनीं माझ्या न्यायकोशाची प्रथमावृत्ति वाचतांना "प्रोफेसर गोल्डस्टक्कर" यांचें स्मरण करून न्यायकोशाचें महत्त्व वर्णन केल्यावरूनच व्यग्रचित्तानें न्यायकोशाची स्तुति व संग्रह करणाऱ्या एतद्देशीय आधुनिक विद्वानांवर न्यायकोशाच्या प्रस्तुत आवृत्तीच्या उपयुक्ततेच्या संबंधानें अवलंबन धरून न राहतां, प्रोफेसर जी० बुलेर आणि मॅक्समुल्लर, कीलहार्न आणि वेबर इत्यादि परराष्ट्रीय विद्वान् लोकांना तरी या कोशाचा उपयोग होईल असें समजून मी आपल्या मनाची तृप्ति करून घेईन. आणि हजारों शास्त्राध्ययन करणाऱ्या मद्देशबांधवांपैकीं एखादा खऱ्या मार्मिक ज्ञात्यास तरी हा कोश उपयोगी झाल्यास मी आपणास कृतकार्य मानून माझ्या श्रमाचें फल मजला मिळालें असें समजेन.

६ मेहेरबान के० एम्० चाट्फील्ड साहेब, मुंबई इलाख्यांतील विद्याखात्याचे डायरेक्टर यांनीं न्यायकोशाचें महत्त्व व उपयुक्तता जाणून त्यास पुनर्जन्म देवविला आणि संस्कृत भाषेच्या उत्कर्षास व शास्त्रांचें सुलभ रीतीनें अध्ययन करण्यास ते साधनीभूत झाले यामुळें त्यांचे सर्व संस्कृतजिज्ञासु लोकांवर फार उपकार झाले आहेत व माझी न्यायविद्या सफल झाली. त्याजबद्दल मी साहेबमजकुरांचा फार फार आभारी आहें.

शके १८१५ }<br>आषाढमास. }

न्यायकोशकर्ता.

# द्वितीयावृत्तौ प्रस्तावना

लोकेस्मिंस्तावत्सकलप्रेक्षावन्तः प्रवृत्तिप्रयोजनमन्विष्य प्रवर्तन्ते। प्रयोजनं हि मुख्यगौणभेदेनैहिकामुष्मिकभेदेन च द्विविधम्। तत्रैहिकं प्रयोजनं च दुःखसंभिन्नत्वादल्पत्वादसारत्वाच्च नात्यादरणीयम्। आमुष्मिकं मुख्यप्रयोजनं तु निःश्रेयसशब्दवाच्यं दुःखासंभिन्नत्वादनल्पत्वात्सारत्वाच्च सर्वैरापामरमत्यादरणीयमेव। तच्च न किल द्रव्यादिना लभ्यम्, अपि तु तत्त्वज्ञानेनैव। तच्च खलु तत्त्वज्ञानम् 'आत्मा शरीरादिपदार्थेभ्यो भिन्नः' इत्याकारकत्वाच्छरीरादिपदार्थज्ञानं विना नोत्पद्यते। शरीरादिपदार्थज्ञानं चाशेषपदार्थप्रतिपादकन्यायशास्त्रेणैव साध्यम्। अत एव न्यायशास्त्रस्यात्मविद्यात्वेन संशयादिभेदानुविधायित्वेन च 'आन्वीक्षिकी' इति संज्ञा। अतो न्यायशास्त्रमावश्यकारम्भम्। एवं वैशेषिकशास्त्रस्यापि सतामैहिकामुष्मिकसकलपदार्थानां व्यावृत्ति-व्यवहारप्रयोजनकलक्षणस्वरूपादिप्रदर्शकत्वात् तर्कशास्त्रत्वेन सकलपदार्थानां प्रमाणतो व्यवस्थापकत्वाच्चावश्यारम्भणीयता सिद्ध्यति। यद्यपि व्याकरणमीमांसादीनि बहूनि दर्शनानि ज्ञानप्रयोजनकानि सन्ति तथापि तानि शब्दस्वरूपनिष्पत्तिकर्मप्रतिपत्त्यादिमात्रपराणि, इति नाशेषपदार्थान्याथातथ्येन व्युत्पादयितुं क्षमन्ते।

किं च—न्यायवैशेषिकशास्त्रयोः सकलपदार्थविवेचनयुक्तिशास्त्रत्वात्तदध्ययनतस्तत्रत्यात्यन्तदुर्लभविविधविचित्रसुतर्कप्रकाशकयुक्तिपरिसंशीलनसंस्कृतबुद्धिसौक्ष्म्यद्वारकनिखिलपदार्थतत्त्वविज्ञानादनायासेनैव सर्वशास्त्रमर्माणि शक्यावगमानि भवन्ति इति न्यायवैशेषिकशास्त्रयोः सर्वशास्त्रोपकारकत्वादप्यत्यवश्यारम्भणीयता सिद्धा।

प्रकृते च खलु—कुशलमतयो यतमाना विद्वांसो व्याकरणादिशास्त्रेषु काव्यादिषु च सर्वेषामश्रमेण मनसः प्रवेशाय तत्तत्सारान्स्वमेधया समुद्धृत्य तत्र तत्र समासव्याससहितान्विविधान्सुगमनिबन्धान्कोशांश्च रचयांचक्रुः। परंतु अभियुक्तैः "काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्" इति

सर्वशास्त्रोपकारकत्वेनोक्तयोर्मध्ये प्रथमोद्दिष्टे तर्कशास्त्रे (न्यायेऽपि) सुख-प्रवेशसाधनभूतो निबन्धोऽद्यावधि न केनापि विदुषा विहितः। अतः मुम्बापुरीस्थायामेल्फिन्स्टन्कालेजाभिधायां महापाठशालायां न्यायाद्यनेक-दर्शनाध्यापनेऽधिकृतेन कर्णाटदेशीयेन झळकीग्रामनिवासिना श्रीमद्राम-भट्टपादपुत्रेण सरस्वत्यम्बागर्भजेन आङ्ग्लभूपालप्रदत्त'महामहोपाध्याय'पदा-ङ्कितेन **भट्ट-भीमाचार्येण** मयातिगहनतरपदार्थरत्नपुञ्जपरिपूर्णतर्कमञ्जूषो-द्घाटनकुञ्चिकाभूतोऽयं न्यायकोशाभिधो ग्रन्थो व्यरचि। अत्र च बहुविध-शास्त्रीयग्रन्थव्युत्पादने समुपयुज्यमानाः प्रायेण सर्वे न्यायवैशेषिकशास्त्रीयाः पारिभाषिकाः, व्यवहारे समुपयुज्यमाना व्यावहारिकाश्च शब्दा गौतम-कणादसूत्र-तत्त्वचिन्तामणि-गदाधरीप्रभृतिग्रन्थेभ्य उद्धृत्याकारादिवर्णक्रमेण विन्यस्ताः। तेषामर्थश्च संगृह्य सुगमरीत्या परिष्कृत्य च प्रदर्शितः। तत्र लक्षणान्युदाहरणानि चोदाहृतानि। तत्र च यानि लक्षणोदाहरणानि गौतम-सूत्रादिग्रन्थेषूपलब्धानि तानि तत्रत्यान्येवेह संगृहीतानि। यदीयानि च लक्षणोदाहरणानि तत्र नोपलब्धानि तदीयानि शास्त्रानुरोधीनि नूतनानि तानि यथामति स्वयं विरच्येहोदाहृतानि।

सर्वशास्त्रोपकारकयोर्दुर्गमतमयोर्न्यायवैशेषिकशास्त्रयोः सुखेन मनःप्रवेश-साधनमेनं कोशं विधाय परमकारुणिकस्य रमाब्रह्माद्यभिवन्दितपादारविन्दस्य श्रीमदिन्दिरारमणस्य चरणयोर्विकस्वरप्रसूनाञ्जलितयाऽहमर्पये। अत्र च शास्त्रदौर्गम्याद्दृग्दोषाद्वा यत्किंचिदसमञ्जसमापतेत्तदा तत्संशोध्य परिपूरयन्तु निर्मत्सरा दयालवो विद्वांसः इति प्रार्थयेऽहम्।

**महामहोपाध्यायो भट्ट-भीमाचार्यः।**

# द्वितीयावृत्तौ विद्यावृद्धिप्रशंसा ।

इह किलानादिसिद्धाव्याहतपरिवर्तनशालिनि कालचक्रे कियन्तं समयं नानाविधसहृदयनृपतिप्रदत्तहस्तावलम्बतयोत्तरोत्तरमधिकाधिकप्रोल्लसनेन परिपूर्णं वृद्धिसुखमनुभूय पुनस्तादृशसहृदयवसुधाधिपतिविलयवशेन क्वचिदप्यालम्बनमपश्यन्ती कतिचिद्दिनानि निरुत्साहतया केवलं ध्रियमाणप्राणा **विद्याविलासिनी** यावत्पतत्प्रकर्षदशामनुभवन्ती लज्जावनतमुखी कालं यापयति तावन्निरुपधिकरुणाशालिचक्रवर्त्याङ्ग्लभूपालप्रदत्तकरावलम्बना किंचिदुन्नमय्य वदनमितस्ततो दृशं संचारयन्ती तन्निवेशिता अनेकविधा अधिजिगांसुसुमत्यन्तेवासिनिवहालंकृताः पाठशाला ददर्श । तत्र चानेकविधश्रुतिस्मृतीतिहासपुराणव्याकरणन्यायतर्कमीमांसासाहित्यशिल्पाद्यनेकविधशास्त्राध्ययनाध्यापनपरिपाटीपर्यालोचनयाऽवश्यंभाविनमात्मोदयं निर्वर्ण्य तास्वेवानवरतं क्रीडासुखमनुबभूव । ततश्च साऽतिदुरवगाहनानाविधनिबन्धाम्बुधिविलोडनं न पदपदार्थपरिज्ञानरूपतरणिसाधनमन्तरा संपद्येतेत्यनुविचिन्त्य तत्संपादनायोहापोहकुशलमतीन्विदुषः प्रैरिरत् । तया प्रेरिताश्च ते यतमानाः सन्तोऽखिलशब्द-शब्दार्थपरिज्ञानसाधनीभूतव्याकरणन्यायादिशास्त्रेषु सुखप्रवेशाय समासव्याससहितान्विविधान्निबन्धान्कोशांश्च रचयांचक्रुः इति ।

विद्याव्यसनतत्परो

महामहोपाध्यायो–भीमाचार्यः ।

## अथ ग्रन्थकृदुद्देशो नाम प्रथम उपोद्धातः ।

प्राचीनार्वाचीनन्याय-तर्कग्रन्थालोडनाकलनाभ्यां प्रसिद्धतादृशग्रन्थकृता-मित्थं पूर्वापरीभावक्रमं प्रतीमः—(१) पूर्वं महर्षिर्गौतम आसीत् (२) ततो महर्षिः कणादः (३) ततो महर्षिर्वात्स्यायनः (४) ततः प्रशस्त-पादाचार्यः (५) तत उद्योतकराचार्यः (६) ततो वाचस्पतिमिश्रः (७) ततः शिवादित्यमिश्रः (व्योमशिवाचार्यः) (८) तत उदयना-चार्यः (९) ततः श्रीधराचार्यः (१०) ततो वल्लभाचार्यः (११) ततो गङ्गेशोपाध्यायः (१२) ततो वर्धमानोपाध्यायः (१३) ततो वासुदेवभट्टाचार्यसार्वभौमः (१४) जयदेवमिश्रश्च (पक्षधरमिश्रः) (१५) ततो रघुनाथतार्किकशिरोमणिः (१६) ततो मथुरानाथतर्क-वागीशः (१७) ततः कणादापरनामा रघुदेवः (१८) ततः शंकर-मिश्रः (१९) ततः प्रगल्भः (२०) ततो भवानन्दः (२१) ततो जगदीशः (२२) ततो गदाधरचक्रवर्ती (२३) भगीरथठक्कुरश्च (२४) ततो रुचिदत्तः (भक्तुनामा) (२५) ततः केशवमिश्रः (२६) ततो वरदराजः (२७) ततः पद्मनाभः (२८) ततो जानकीनाथः (२९) ततो रामभद्रः (३०) विश्वनाथन्यायपञ्चाननश्च (३१) ततो रुद्रभट्टाचार्यः (३२) अन्नंभट्टश्च इत्यलं विस्तरेण ।

---

## अथ ग्रन्थकृच्चरितं नाम द्वितीय उपोद्धातः ।

इदानीं ग्रन्थकाराणां क्रमेण जन्मस्थितिकालचरितं निरूप्यते—

तत्र (१) महर्षिर्गौतम आत्रेयः । स च न्यायदर्शनस्य[1] कर्ता । न्यायदर्श-

---

1 अत्र प्रसङ्गतः षड्दर्शनानां सूत्राणां क्रमः सर्वग्रन्थाकलनात्कथ्यते—'पूर्वं बादरायणीयं ब्रह्ममीमांसादर्शनं संबभूव ततो जैमिनीयं धर्ममीमांसादर्शनम् ततो गौतमं न्यायदर्शनम् ततः काणादं वैशेषिकदर्शनम् ततः कापिलं सांख्यदर्शनम् ततः पातञ्जलं योगदर्शनम्' इति क्रमं वयं प्रतीमः । केचित्तु—'षण्णां सूत्रकाराणां समान-

नस्य त्वध्यायपञ्चकम्। प्रत्यध्यायमाह्निकद्वयम्। पञ्चाध्याय्याः सूत्राणां संख्या च सप्तत्रिंशदधिकपञ्चशतानि ( ५३७ ) इति। एवं महर्षिगौतमं गोतमनामानं केचन मन्यन्ते। अन्ये तु—'नैयायिकः अक्षपादः अक्षचरणः प्रशस्तपादः प्रशस्तचरणश्च' इति महर्षेर्गौतमस्यैव नामभिदाः सन्ति इति मन्यन्ते।

( २ ) महर्षिः कणादः[2] कश्यपगोत्रजः 'उलूकः'[3] इति 'औलूक्यः' इति चाख्यायते। मिथिलादेशे तस्य निवासस्थानम्। योगाचारविभूत्या

---

कालिकत्वमेव' इत्याहुः। चन्द्रकान्ततर्कालंकारस्तु—'सांख्यदर्शनाविष्कर्तुः कपिलस्यैव (नास्तिककपिलस्य) दर्शनकारेषु प्राचीनतमत्वम् आदिपतञ्जलेस्तत्परत्वम् आत्रेयस्य काशकृत्स्नेश्च ततोऽवरत्वम् कणभक्षाक्षचरणपाराशर्यजैमिनीनां ततोऽप्यर्वाचीनत्वम्' इत्याह। तदुभयकथनमतीवाविचारतरम्। ननु 'वेदान्तसूत्रादौ "एतेन योगः प्रत्युक्तः" इत्यादिना योगमतखण्डनदर्शनात् योगसूत्रानन्तरमेव वेदान्तसूत्रम् उपनिषदादौ सांख्यकपिलमतप्रतिपादनात् सांख्यसूत्रानन्तरमेवोपनिषदाद्युत्पत्तिश्च' इति चेन्न। न ह्युपनिषदादौ प्रसिद्धाः कपिलबादरायणजैमिन्यादय आधुनिकषट्सूत्रकर्तारो भवितुमर्हन्ति। "एतेन योगः प्रत्युक्तः" इत्यादिसूत्राणि तु अनादिसिद्धयोगसांख्यबौद्धचार्वाकादिमतखण्डनपराण्येव न त्वर्वाचीनसांख्ययोगादिसूत्र-बौद्धचार्वाकादिप्रणीतग्रन्थखण्डनपराणि इति। एतच्च 'सांख्य' 'योग' 'दर्शन' इत्यादितत्तच्छब्दव्याख्यानेषु संक्षेपतः प्रदर्शितमेवेत्यत्रैव विरम्यते। बौद्धः शाक्यः। शाक्यमतं तु ख्रिस्तमतात्पूर्वं (५८८) वर्षेऽभूत्। शाक्यमुनेर्जन्मतः पूर्वं वाल्मीकिरामायणलेखनम्। तत्र किष्किन्धाकाण्डे ( १८, ३०, ३१, ३२ ) मनुवचनोद्धृतिदर्शनात् (८। ३१६–३१८) मनुस्मृतेस्तत्पूर्वकालिकत्वं गम्यते। मनुसंहिता तु ख्रिस्तजन्मतः पूर्वं ( ९ ) नवशताब्द्यामभवत्। न्यायवैशेषिकादिषट्सूत्रानन्तरं मनुसंहिताभवत् इत्याहुः।

२ अयं च कणभक्षणेन तपश्चरणादुञ्छेन वर्तनाच्च 'कणादः' इति प्रसिध्यति।

३ अत्रैतिह्यम्—तपस्विने कणादमुनये स्वयमीश्वर उलूकरूपधारी प्रत्यक्षीभूय पदार्थषट्कमुपदिदेश। तदनु स महर्षिर्लोकानुकम्पया वैशेषिकसूत्राणि चकार। तेन तद्दर्शनस्य 'औलूक्यदर्शनम्' इति नामान्तरम्। अत्र केचिद्वदन्ति—'सोऽयं मुनिर्महाभारते भीष्मस्तवराजे उलूकनाम्न उल्लेखान्महाभारतादपि पूर्वकालिकः। किं च—"न वयं षट्पदार्थवादिनो वैशेषिकादिवत्" इति सांख्यसूत्रादप्यतिप्राचीनः। एवम्—"महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इति ब्रह्मसूत्रपर्यालोचनया वेदान्तदर्शनादप्येतद्दर्शनं ( वैशेषिकदर्शनम् ) प्राचीनम्। 'शब्दानामुत्पत्तिविनाशवत्त्वम्' इति काणाद न्यायदर्शनसिद्धान्तः। स च "कर्मैके तत्र दर्शनात्" इत्यादिसूत्रैरुद्धृत्य महता यत्नेन जैमिनिना खण्डितः इति मीमांसातोऽपि प्राचीनत्वम्। रावणेनापि भाष्यमस्य दर्शनस्योपरि रचितमिति रत्नप्रभादौ दर्शितम् इति लङ्कापुरीस्थरावणादपि प्राचीनत्वम्।

महेश्वरनियोगप्रसादावधिगम्य वैशेषिकदर्शनं प्रणिनाय। वैशेषिकदर्शने चाध्यायदशकम् । प्रत्यध्यायमाह्निकद्वयम् । वैशेषिकदर्शनस्य सूत्राणि तु सप्तत्यधिकानि त्रीणि शतानि ( ३७० ) इति।

( ३ ) वात्स्यायनः परमर्षिन्यायसूत्राणां भाष्यमकरोत् ।

( ४ ) प्रशस्तपादाचार्यश्च वैशेषिकसूत्राणां भाष्यमकरोत् । अस्य ( प्र-

---

किं च—वैशेषिके दर्शनेऽनुमानस्य संक्षेपतो वर्णनात् हेत्वाभासस्य त्रैविध्यकथनाच्चेति 'पूर्वं कणादेन पूर्वोक्तविषयस्य रीतिः समुद्भाविता । ततोऽनन्तरमक्षपादेन विस्तारिता सम्यङ्निबद्धा च। समानतन्त्रे वैशेषिके प्रतितन्त्रसिद्धान्तसिद्धं नैयायिकस्य मनस इन्द्रियत्वम्' इति वैशेषिकदर्शनस्य न्यायदर्शनादपि प्राचीनत्वमप्यवगम्यते इति । तदेतत्केषांचित्प्रकल्पनं चादूरदर्शित्वेन 'कहां रामराज, कहां पोतराज' इति प्राकृतन्यायसमाकलितम् इत्यतो वयं सकलसूत्रशास्त्रतात्पर्याकलनादित्थं प्रतीमः—महाभारतप्रतिपादित उलूकर्षिरस्मादुलूकनाम्नः कणादाद्भिन्न एव । 'महद्दीर्घवद्वा' इत्यादिब्रह्मसूत्राणां तु अनादिसिद्धवैशेषिकमतखण्डनपरत्वमेव न त्वर्वाचीनकणादर्षिप्रणीतसूत्रार्थखण्डनपरत्वम्। एवमेव जैमिनिमीमांसादर्शनस्यापि तात्पर्यमुन्नेयम् । रावणस्तु कश्चनार्वाचीनब्राह्मण एव न तु श्रीरामद्वेष्टा रामायणप्रतिपाद्यः पौलस्त्यः इति । न केवलं हेत्वाभासत्रैविध्यरूपसंक्षेपकथनेनैव न्यायदर्शनात्प्राचीनत्वं कणाददर्शनस्य संभवति । यतो विपरीतमपि वक्तुं शक्येत। तथा हि—'न्यायदर्शने हेत्वाभासानां पञ्चत्वं प्रथमतः प्रतिपादितम् तदनन्तरं कणादेन पञ्चत्वं परित्यज्य हेत्वाभासस्य युक्त्या संक्षेपतो वा त्रैविध्यं प्रतिपादितम्' इत्यपि वक्तुं शक्यते इति । तस्मात् 'ब्रह्मसूत्रम् जैमिनिमीमांसासूत्रम् न्यायसूत्रम् वैशेषिकसूत्रम् सांख्यसूत्रम् योगसूत्रम्' इत्येवं क्रमेण सूत्राणि संबभूवुः इति ममाभिमतिः।

४ 'दर्शनान्तरकारैरनङ्गीकृतस्य 'विशेष' पदार्थस्याङ्गीकारादस्य वैशेषिकतया प्रसिद्धिः' इति केचिद्वदन्ति । वस्तुतस्तु—"द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे । यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः" इति ।

५ भाष्यलक्षणं च "सूत्रार्थो वर्ण्यते येन पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इति ।

६ केचित्तु—बौधायनसूत्रे प्रवराध्याये आङ्गिरसगणान्तःपातिशारद्वतगणे पठितः 'प्रशस्तः' इत्येनममन्यन्त । अन्ये तु—'प्रवररत्न'ग्रन्थे आङ्गिरसगणे गौतमवर्गे पठितः 'प्रशस्तः' इति प्रशस्तनामानमेनं मेनिरे ।

७ अत्र—'वैशेषिकसूत्राणां भारद्वाजवृत्तिर्गङ्गाधरकविरत्नकविराजकृताऽस्ति' इति श्रूयते । अन्ये तु—भारद्वाजनाम्नोद्योतकराचार्येणेयं वृत्तिः कृता इत्याहुः । अन्ये तु—'उद्योतकराचार्यस्यैव 'भारद्वाज' इति नाम तेन कृता वृत्तिर्भारद्वाजवृत्तिः' इति मन्यन्ते ।

शस्तपादाचार्यस्य ) 'प्रशस्तदेवः प्रशस्तचरणः' इति नामान्तरे । गौतम-वात्स्यायनयोरिव समानतन्त्रत्वेन कणादप्रशस्तपादयोरपि परमर्षित्वम् क-पिल-पञ्चशिखाचार्ययोरिवाचार्यत्वं च उदयनाचार्य-कन्दलीकार-शंकरमिश्रा-दयः स्वीचक्रुः इति ।

( ५ ) उद्योतकराचार्यो न्यायसूत्राणां वार्तिकंमकरोत् । अयं च इतो वर्षाणां द्वादशशत्याः ( १२०० ) पूर्वमासीत् । 'अयं च भारद्वाजगोत्रजः' इति केचिदाहुः । तत्र मया संदिह्यते 'अयं च इतो द्वादशशत्याः पूर्वं कदासीत्' इति मया न ज्ञायते च इति ।

( ६ ) वाचस्पतिमिश्रश्च न्यायवार्तिकग्रन्थस्य व्याख्यानं A न्यायवार्ति-कतात्पर्यम्, B न्यायकणिकाम्, C [१०]परिशिष्टव्याख्यानं चाकरोत् इति ।

( ७ ) शिवादित्यमिश्रश्च 'न्यायाचार्यः' इति स्तूयते । अयं च 'व्योम-[११]शिवाचार्यः' इति केचिद्वदन्ति । शिवादित्यमिश्रस्तु 'सप्तपदार्थी'नामानं ग्र-न्थमकरोत् इति ।

( ८ ) [१२]उदयनाचार्यश्च विक्रमीय ( ८४५ ) वर्षादुत्तरं (१०४८ ) व-

---

८ वार्तिकलक्षणं च—"उक्तानुक्तद्विरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः" ( पराशरपुरा० अ० १८ ) इति ।

९ 'अयं वाचस्पतिमिश्रः तत्त्वचिन्तामणिप्रकाशकृतो वाचस्पतिमिश्रादन्य एव' इति केचित्पण्डिता आहुः । अयं वाचस्पतिमिश्रः 'शंकरभारतीकृतशारीरकमीमांसाख्यभा-ष्यस्य भामत्याख्यव्याख्याकार एव' इति बहवो मन्यन्ते । अन्ये तु-'अयं वाचस्पतिस्तु भामतीकारादन्य एव भामतीकारश्चान्यः कश्चन वेदान्तशास्त्रज्ञ आसीत्' इत्याहुः ।

१० 'इदं परिशिष्टं तु उदयनाचार्यकृतम्' इति केचिद्वदन्ति । अन्ये तु—इदं परि-शिष्टं 'न्यायकलिकापरिशिष्टमेव' इत्यमन्यन्त ।

११ व्योमशिवाचार्यस्तु प्रशस्तपादकृतभाष्यस्य टीकारूपं व्योमवती-नामानं ग्रन्थं कृतवान् ।

१२ 'उदयनाचार्येण सह जैनानां विवादः समजनि । अवशिष्टनास्तिकानां मूलोच्छेद-श्चोदयनेन कृतः' इति जैनग्रन्थाकलनादवगम्यते । उदयनाचार्यः श्रीहर्षपितुः श्रीहीरस्य समानकालिकः । 'श्रीहर्षस्तु ( शके ८८९ ) वर्षे आसीत्' इति नैषधटीकयाऽवगम्यते । केचित्तु-'खण्डनग्रन्थेन च श्रीहर्षात्पूर्वं एवोदयन इत्यवगम्यते' इत्याहुः । यस्तु रत्नाव-

र्षात्पूर्वं मिथिलादेशे न्यवसत् । केचित्तु—'अभिनवोदयनाचार्यो दक्षिणदेशे वङ्गदेशे वा जातः' इत्याहुः । उदयनाचार्यो न्यायाचार्यत्वेन प्रसिद्धः A न्यायवार्तिकतात्पर्यस्य टीकारूपं न्यायवार्तिकतात्पर्यपरिशुद्धिनामानं ग्रन्थम् B न्यायपरिशिष्टम् C प्रशस्तपादकृतभाष्यस्य व्याख्यानरूपं किरणावलीनामानं ग्रन्थम् D आत्मतत्त्वविवेकम् ( बौद्धाधिकारम् ), E न्यायकुसुमाञ्जलिं च कृतवान् इति ।

( ९ ) श्रीधराचार्यश्च विक्रमाब्दे ( १०४८ ) तथा ( शके ९१३ ) वर्षे प्रशस्तपादाचार्यकृतभाष्यस्य व्याख्यानरूपं न्यायकन्दलीनामानं ग्रन्थं कृतवान् इति । श्रीधराचार्यस्य पिता बलदेवः । माता तु अव्वोका । निवासस्तु गौडदेशापरपर्यायवङ्गदेशान्तर्गते गङ्गायाः पश्चिमे तटे 'राढ' देशे भूरिश्रेष्ठिक इति प्रसिद्धे भूरिसृष्टिग्रामे 'राढापुरी' इत्यस्मिन् ।

( १० ) महामहोपाध्यायो वल्लभाचार्यश्च न्यायलीलावतीनामानं ग्रन्थं कृतवान् इति ।

( ११ ) गङ्गेशोपाध्यायश्च इतः सप्तशत्याः पूर्वं ( शके ११०० ) एकादशशतके वङ्गदेशे आसीत् । केचित्तु—'( शके १०३० ) एतस्माद्वर्षात्पूर्वमासीत्' इत्यङ्गीचक्रुः[13] । गङ्गेशोपाध्यायस्तु सकलन्यायतर्कग्रन्थेभ्यः सारमुद्धृत्य तत्त्वचिन्तामणि—नामानं नव्यपरिष्कारपरिष्कृतमुत्तमं ग्रन्थं विरचितवान् इति ।

( १२ ) वर्धमानोपाध्यायश्च[14] गङ्गेशोपाध्यायपुत्रः मिथिलादेशे दरभंगा-

---

त्यादौ श्रीहर्षो वत्सराज उदयनश्च प्रतिपादितः सोऽन्य एव इति । अन्ये तु—'श्रीहर्षात्पूर्व एव वाचस्पतिमिश्रः इति शंकरमिश्रग्रन्थादवगम्यते । अतो वाचस्पतिमिश्रात्पूर्वमेवोदयनाचार्य आसीत्' इत्याहुः । परे तु—'वाचस्पतिमिश्रादनन्तरकालिक एवोदयनाचार्यः इति तात्पर्यपरिशुद्धिग्रन्थेनात्मतत्त्वविवेकेन चावगम्यते' इति प्राहुः ।

१३ अत्रेदमनुमापकम्—लक्ष्मणसेननामा नृपतिर्वङ्गदेशे बभूव यस्य सभापण्डितो हलायुधभट्ट आसीत् । तस्य राज्ञः प्रवृत्तिः ( शालि० शके १०३० ) वर्षे प्रादुरासीत् । तथाच 'ततोऽपि पूर्वं गङ्गेशोपाध्याय आसीत्' इति निश्चीयते ।

१४ गणरत्नमहोदधिकारो गोविन्दसूरिशिष्यो वर्धमानस्तु जैन एव इत्यस्माद्वर्धमानोपाध्यायादन्यः इति ज्ञेयम् । गणरत्नमहोदधिर्विक्रमशकवर्षेषु ( ११९७ ) अतीतेषु विरचितः इति ।

मण्डलान्तर्गते 'करिजन' ग्रामे जातः उदयनाचार्यकृतायाः किरणावल्या व्याख्यानरूपं किरणावलीप्रकाशनामानं ग्रन्थं न्यायलीलावत्या व्याख्यानरूपं न्यायलीलावतीप्रकाशनामानं ग्रन्थं उदयनकृतन्यायपरिशिष्टस्य प्रकाशं गौतमसूत्रस्य तत्त्वचिन्तामण्यादीनां व्याख्यानं च कृतवान् इति ।

( १३ ) महामहोपाध्याय-न्यायपञ्चानन-वासुदेवभट्टाचार्यसार्वभौमश्च तत्त्वचिन्तामणेर्व्याख्यानं कृतवान् । वासुदेवसार्वभौमस्य चत्वारः शिष्या आसन्—गौराङ्गदेवः रघुनाथः रघुनन्दनः कृष्णानन्दश्चेति । तत्र ( १ ) गौराङ्गस्तु[१५] 'भगवतो विष्णोरवतारः ( शचीनन्दनः )' इति केचिदाहुः । अन्ये तु—'विरक्तो भगवद्भक्तः' इत्याहुः । ( २ ) रघुनाथतार्किकशिरोमणिश्च दीधितिकारो नैयायिकः । ( ३ ) रघुनन्दनभट्टाचार्यश्च[१६] धर्मशास्त्री । ( ४ ) कृष्णानन्दवागीशश्च मन्त्रशास्त्री जातः इति । एते च चत्वारस्तत्तच्छास्त्रेषु निबन्धांश्चक्रुः इति किंवदन्ती ।

( १४ ) जयदेवमिश्रः ( पक्षधरमिश्रः ) हरिमिश्रशिष्यो वासुदेवसार्वभौमस्य सहाध्यायी तत्त्वचिन्तामणेर्व्याख्यानमालोकनामानं ग्रन्थं चकार इति ।

( १५ ) रघुनाथभट्टाचार्यतार्किकशिरोमणिश्च वासुदेवसार्वभौमशिष्यो[१७] वङ्गदेशे नवद्वीपग्रामे नद्याशान्तिपुरे ( भाषया 'नडिया' इति प्रसिद्धे ) जातः । स च ( रघुनाथतार्किकशिरोमणिः ) A तत्त्वचिन्तामणेर्व्याख्यानं दीधितिनामानं B बौद्धाधिकारापरपर्यायस्यात्मतत्त्वविवेकस्य व्याख्यानं दीधितिनामानं C किरणावल्या न्यायलीलावत्याश्च प्रकाशस्य ( वर्धमानकृतस्य ) व्याख्यानं द्रव्यप्रकाशविवृतिं गुणप्रकाशविवृतिं ( विषमपदटिप्पनीं ) दीधितिनामानं D पदार्थतत्त्वनिरूपणं नाम ( पदार्थखण्डनम् ) E आख्यातवादं ( आख्यातविवेकम् ) च ग्रन्थं चकार इति ।

---

१५ गौराङ्गो नाम राजाऽस्ति । स च शालिवाहनशके (१४०७) वर्षे आविरासीत् ।

१६ मनुस्मृतिव्याख्यानकर्ता च राघवानन्दः अयं तु रघुनन्दनः इति तयोर्भेदः ।

१७ अत्रैतिह्यम्—'सार्वभौमे चाध्ययननिवृत्त्या स्वदेशं गते तच्छिष्ये रघुनाथशिरोमणावपि पक्षधरमिश्राच्चाध्येतुं समायाते कदाचित् सामान्यलक्षणायाः प्रत्यासत्त्याः खण्डने च कृते सति पक्षधरमिश्रः शिष्यत्वमापन्नं रघुनाथं प्रति प्रोवाच—"वक्षोजपानकृत्काण संशये जाग्रति स्फुटे । सामान्यलक्षणा कस्मादकस्मादपलप्यते" इति ।

(१६) मथुरानाथतर्कवागीश-भट्टाचार्यश्च रामतर्कालंकारात्मजः बङ्ग-देशीयो रघुनाथतार्किकशिरोमणेः शिष्यः आत्मतत्त्वविवेक-तत्त्वचिन्तामणि-प्रभृतिमूलग्रन्थानां रघुनाथाख्यस्वगुरुकृतानां च सर्वेषां ग्रन्थानां व्याख्या-नम् ( गुणप्रकाशविवृतिरहस्यादि ) कृतवान् इति ।

(१७) रघुदेवन्यायालंकारः ( कणादापरनामा ) मथुरानाथस्य शिष्यो वङ्गदेशीयः । स च दीधितेरवयवग्रन्थस्य च व्याख्यां रघुनाथशिरोमणिकृत-पदार्थतत्त्वनिरूपणस्य टीकां ( पदार्थतत्त्वविवेचनटीकाम् ) ईश्वरवादम् आकाङ्क्षावादं भाषारत्नं च कृतवान् इति ।

(१८) म० म० शंकरमिश्रश्च रघुदेवशिष्यो भवनाथात्मजः A कणा-दरहस्य[१८]नामानं B वैशेषिकसूत्रोपस्कारं C न्यायलीलावतीदीधितेर्व्याख्यानं न्यायलीलावतीकण्ठाभरणं D बौद्धाधिकारस्य ( आत्मतत्त्वविवेकस्य ) व्या-ख्यानं कल्पलतानामानं च ग्रन्थं रचयामास इति ।

(१९) प्रगल्भ[१९]श्च खण्डनोद्धारा[२०]ख्यग्रन्थमकरोत् इति ।

(२०) भवानन्दनामा महामहोपाध्याय-न्यायपञ्चानन-न्यायसिद्धान्त-तर्कवागीश-भट्टाचार्यश्च A तत्त्वचिन्तामणेर्व्याख्यानं B दीधितेर्व्याख्यानं C शब्दार्थमञ्जरीं, D कारकवादं च कृतवान्, इति ।

(२१) म० म० न्यायवाचस्पति-जगदीशतर्कालंकारभट्टाचार्यश्च भवा-नन्दशिष्यः A प्रशस्तपादकृतभाष्यस्य व्याख्यानरूपं भाष्यसूक्तिनामानम् B शब्दशक्तिप्रकाशिकाम् C तर्कामृतम् D दीधितेष्टीकां रहस्यनाम्नीं च चकार इति ।

(२२) म० म० गदाधरमिश्रो भट्टाचार्यचक्रवर्ती च जगदीशस्य रत्न-कोशकृतो हरिरामतर्कालंकारभट्टाचार्यस्य च शिष्यः A तत्त्वचिन्तामणि-

---

१८ स च ग्रन्थो भाष्याभिप्रायबोधको वार्तिकलक्षणाक्रान्तः इति ज्ञेयम् ।

१९ 'रघुनाथतार्किकशिरोमणिना दीधितिग्रन्थे पूर्वपक्षीयव्याप्तिवादे प्रगल्भकृतग्रन्थ उदाहृतः' इति 'कश्चन प्रगल्भो दीधितिकारात्पूर्वकालिक एव आसीत्' इति विज्ञायते ।

२० अस्यैकं पुस्तकं ( शाके १४३६ ) वर्षे लिखितं वाराणस्यामुपलभ्यते ।

व्याख्यानदीधितेष्टीकां संगतिनाम्नीं लक्षसंख्यकाम् B बौद्धाधिकारव्याख्याम्, C दीधितेश्च व्याख्यां गदाधरीम् D द्विपञ्चाशत्संख्यकान् (५२) वादार्थांश्च चकार इति।

(२३) अथ भगीरथठक्कुरो मेघठक्कुरापरनामा मैथिलः पक्षधरमिश्राणां शिष्यः जयदेवपण्डितकवेर्विंशाब्दे जातः। भगीरथठक्कुरस्य महादेवाख्यः थेघठक्कुरापरनामा सोदर आसीत्। भगीरथठक्कुरो वर्धमानोपाध्यायकृतानां प्रकाशग्रन्थानाम् (किरणावलीप्रकाशादीनाम्) व्याख्यानरूपान् द्रव्यप्रकाशिका-गुणप्रकाशिकादिनाम्नो ग्रन्थान् (कुसुमाञ्जलिप्रकाशप्रकाशिकान्यायलीलावतीप्रकाशप्रकाशिकादीन्) चकार इति।

(२४) रुचिदत्तः[२१] (भाक्तुनामा) पक्षधरमिश्राणां शिष्यः A तत्त्वचिन्तामणेर्व्याख्यानरूपं प्रकाशनामानं B कुसुमाञ्जलिप्रकाशस्य वर्धमानकृतस्य व्याख्यानरूपं मकरन्दनामानं च ग्रन्थं चकार इति।

(२५) अथ—केशवमिश्रश्च न्यायसूत्रानुसारिणं तर्कभाषानामानं ग्रन्थं विरचितवान् इति।

(२६) अथ—वरदराजश्च न्यायसूत्रानुसारिणं तार्किकरक्षानामानं श्लोक-(१६१) निबद्धं ग्रन्थं विरचितवान् इति।

(२७) अथ—पद्मनाभमिश्रस्तु बलभद्रमिश्रात्मजो विजयश्रीगर्भजो (विश्वनाथगोवर्धनमिश्रबन्धुः ?) A तत्त्वचिन्तामणेर्व्याख्यानरूपं चिन्तामणिपरीक्षानामानं B राद्धान्तमुक्ताहारं (अस्य व्याख्यानं कणादरहस्यम् ?) C किरणावल्या द्वितीयं व्याख्यानं किरणावलीभास्करनामानं च ग्रन्थं चकार इति।

(२८) अथ—म० म० जानकीनाथो भट्टाचार्यचूडामणिर्न्यायसिद्धान्तमञ्जरीनामानं ग्रन्थं चकार इति।

(२९) रामभद्रो जानकीनाथभट्टाचार्यचूडामणेः पुत्रः न्यायसूत्रटीकां न्यायरहस्यनामानं ग्रन्थं चकार इति।

(३०) अथ—विश्वनाथ-न्यायपञ्चाननश्च विद्यानिवासभट्टाचार्यात्मजो

---

२१ केचित्तु रुचिदत्त-प्रगल्भ-रघुनाथानां द्वित्वेन विभिन्नत्वममन्यन्त।

वङ्गदेशीयः । अयं च A भाषापरिच्छेदनामानं B तट्टीकां न्यायसिद्धान्तमुक्तावलीनामानं ग्रन्थं C न्यायसूत्रवृत्तिं च चकार इति ।

( ३१ ) रुद्रभट्टाचार्यो[२२] विश्वनाथन्यायपञ्चाननसहोदरः A गुणप्रकाशविवृतेर्भावप्रकाशिकाम् B रौद्रीनाम्नीं दीधितेर्व्याख्यां च कृतवान् । अनेन मथुरानाथतर्कवागीशवत् बहवो ग्रन्था व्याख्याताः इति ।

( ३२ ) अथ—अन्नंभट्टश्च कर्णाटकदेशीयः ( तैलङ्गदेशीयो वा? )। स च काश्यामधीत्य[२३] A प्रशस्तपादकृत-वैशेषिकसूत्रभाष्यस्थग्रन्थान् संक्षेपतो गृहीत्वा तर्कसंग्रहनामानं ग्रन्थं B तर्कसंग्रहस्य टीकारूपं तत्त्वचिन्तामणेः रघुनाथतार्किकशिरोमणिकृतदीधितिग्रन्थाच्च सारमुद्धृत्य तर्कदीपिकानामानं च ग्रन्थं रचयामास इति संक्षेपः ।

---

## अथ ग्रन्थोत्पत्तिनामा तृतीय उपोद्घातः

### ( न्यायवैशेषिकग्रन्थानामुत्पत्तिसंख्यानम् )

ग्रन्थः — कर्ता

१ ( १ ) न्यायसूत्रम् ( १ )—गौतमर्षिः ।

२ ( २ ) न्यायसूत्रस्य भाष्यम्—वात्स्यायनः ।

३ ( ३ ) न्यायवार्तिकम्—उद्योतकराचार्यः ।

४ ( ४ ) न्यायवार्तिकतात्पर्यम्—वाचस्पतिमिश्रः ।

५ ( ५ ) न्यायवार्तिकतात्पर्यपरिशुद्धिः—उदयनाचार्यः ।

६ ( ६ ) न्यायसूत्रवृत्तिः—विश्वनाथपञ्चाननः ।

७ ( ७ ) न्यायसूत्रटीका ( न्यायरहस्यम् )—रामभद्रः ।

८ ( १ ) षोडशपदार्थी—गणेशदासः ।

९ ( २ ) टिप्पनम्—वासुदेवसार्वभौमभट्टाचार्यः ।

---

२२ रामेश्वरभट्टाचार्यात्मजो रुद्रभट्टाचार्यस्त्वन्य एव । तेन च 'रौद्री' इत्याख्या न्यायसिद्धान्तमुक्तावल्या व्याख्या कृता ।

२३ अत्रान्नंभट्टप्रशंसाकिंवदन्ती—"काशीगमनमात्रेण नान्नंभट्टायते द्विजः" इति ।

१० ( ३ ) पदार्थतत्त्वनिरूपणम् ( पदार्थखण्डनम् )—रघुनाथभट्टाचार्यतार्किकशिरोमणिः ।

११ ( ४ ) पदार्थतत्त्वनिरूपणटीका ( पदार्थतत्त्वविवेचनटीका )—रघुदेवन्यायालंकारः ।

१२ ( ५ ) तार्किकरक्षा—वरदराजः ।

१३ ( ६ ) तर्कभाषा—केशवमिश्रः ।

१४ ( १ ) वैशेषिकसूत्रम् ( २ )—महर्षिः कणादः ।

१५ ( २ ) भाष्यम्—प्रशस्तपादाचार्यः ।

१६ ( ३ ) भाष्यम्—चन्द्रकान्ततर्कालंकारः ( शके १८००)

१७ ( ४ ) भारद्वाजवृत्तिः ( वैशेषिकसूत्रव्याख्या )—गङ्गाधरकविरत्नकविराजः ।

१८ ( ५ ) न्यायकन्दली—( प्रशस्तभाष्यस्य टीका )—श्रीधराचार्यः ।

१९ ( ६ ) किरणावली ( प्रशस्तभाष्यस्य टीका )—उदयनाचार्यः ।

२० ( ७ ) व्योमवती ( प्रशस्तभाष्यस्य टीका )—व्योमशिवाचार्यः ।

२१ ( ८ ) लीलावती (प्रशस्तभाष्यस्य टीका)—श्रीवत्साचार्यः ।

२२ ( ९ ) भाष्यसूक्तिः (प्रशस्तपादकृतभाष्यस्य व्याख्यानम्)—जगदीशभट्टाचार्यः ।

२३ ( १० ) भिक्षुवार्तिकम् (प्रशस्तभाष्यस्य व्याख्यानम् (?) )—कर्ता नोपलभ्यते । 'पञ्चशिखाचार्यः कर्ता' इति केचिदाहुः । 'विज्ञानभिक्षुः कर्ता' इत्यन्ये आहुः ।

२४ ( १ ) किरणावलीप्रकाशः ( किरणावल्या व्याख्या )—वर्धमानोपाध्यायः ।

२५ ( २ ) किरणावलीटिप्पनम्—रघुनाथतार्किकशिरोमणिः ।

२६ ( ३ ) द्रव्यप्रकाशिका ( किरणावलीप्रकाशस्य व्याख्यानम् )—भगीरथठक्कुरः ।

२७ ( १ ) गुणदीधितिः गुणप्रकाशविवृतिर्वा—रघुनाथतार्किकशिरोमणिः ।

२८ ( २ ) गुणप्रकाशविवृतिरहस्यम् गुणदीधितिमाथुरी वा—मथुरानाथतर्कवागीशभट्टाचार्यः ।

२९ ( ३ ) गुणप्रकाशविवृतिभावप्रकाशिका गुणप्रकाशविवृतिपरीक्षा वा ( गुणप्रकाशविवृतेर्व्याख्यानम् )—रुद्रभट्टाचार्यः ।

३० ( ४ ) गुणप्रकाशविवृतेर्व्याख्यानम्—रामकृष्णः ।

३१ ( ५ ) गुणप्रकाशविवृतेर्व्याख्यानम्—जयरामभट्टाचार्यः ।

३२ किरणावलीभास्करः ( किरणावल्या द्वितीयं व्याख्यानम् )—पद्मनाभमिश्रः ( बलभद्रमिश्रात्मजः ) ।

३३ पञ्जिका ( न्यायकन्दल्याष्टीका )—राजशेखरसूरिः ।

३४ सिद्धान्तमुक्ताहारः }
३५ कणादरहस्यम् } —पद्मनाभमिश्रः ।

३६ लक्षणमाला }
सप्तपदार्थी (७) } —शिवादित्यमिश्रः ।

सप्तपदार्थ्याष्टीकाः कथ्यन्ते—

३७ ( १ ) पदार्थचन्द्रिका—शेषानन्तः ।

३८ पदार्थचन्द्रिकायाष्टीका—नरसिंहः ।

३९ ( २ ) मितभाषिणी—मध्वसरस्वती ( कृष्णातीरनिवासी ) ।

४० ( ३ ) टीका—जिनवर्धनसूरिः ( संवत् १४७१ )

४१ ( ४ ) लघुटीका—सिद्धचन्द्रगणिः ।

४२ निष्कण्टका—मल्लिनाथः ।

४३ बौद्धाधिकारः ( ८ ) ( बौद्धधिकारः आत्मतत्त्वविवेको वा )—उदयनाचार्यः ।

बौद्धाधिकारव्याख्याः कथ्यन्ते—

४४ ( १ ) दीधितिः—रघुनाथतार्किकशिरोमणिः ।

४५ ( २ ) कल्पलता—शंकरमिश्रः ( भवनाथात्मजः ) ।

४६ ( ३ ) गदाधरी गादाधरी वा —गदाधरभट्टाचार्यचक्रवर्ती ।

४७ ( ४ ) व्याख्या—नारायणः ।

४८ बौद्धाधिकारदीधितेर्व्याख्या—गदाधरभट्टाचार्यचक्रवर्ती ।

४९ न्यायकुसुमाञ्जलिः—उदयनाचार्यः ।

न्यायकुसुमाञ्जलेष्टीकाः कथ्यन्ते—

५० ( १ ) प्रकाशः—वर्धमानोपाध्यायः ।

५१ ( २ ) व्याख्या—परमहंसपरिव्राजकाचार्यः श्रीनारायणतीर्थः ।

५२ ( ३ ) व्याख्या—म. म. त्रिलोचनः ।

५३ ( ४ ) व्याख्या—म. म. गुणानन्दः ।

५४ ( ५ ) व्याख्या—हरिदासभट्टाचार्यः ।

५५ ( १ ) मकरन्दः ( प्रकाशस्य व्याख्या )—रुचिदत्तः ।

५६ न्यायलीलावती ( १० )—म. म. वल्लभाचार्यः ।

५७ ( १ ) न्यायलीलावतीप्रकाशः—वर्धमानोपाध्यायः ।

५८ ( २ ) न्यायलीलावतीदीधितिः ( विभूतिः )—रघुनाथतार्किकशिरोमणिः ।

५९ ( ३ ) न्यायलीलावतीकण्ठाभरणम्—म. म. शंकरमिश्रः ।

६० ( ४ ) न्यायलीलावतीप्रकाशविवेकः—म. म. मथुरानाथतर्कवागीशभट्टाचार्यः

६१ तत्त्वचिन्तामणिः ( ११ )—गङ्गेशोपाध्यायः ।

तत्त्वचिन्तामणेष्टीकाः कथ्यन्ते—

६२ ( १ ) व्याख्या—वासुदेवसार्वभौमभट्टाचार्यः ।

६३ ( २ ) आलोकः—पक्षधरमिश्रः ।

६४ ( ३ ) दीधितिः—रघुनाथभट्टाचार्यतार्किकशिरोमणिः ।

६५ ( ४ ) प्रकाशः—रुचिदत्तः ( पक्षधरमिश्रशिष्यः ) ।

६६ ( ५ ) रहस्यम्—मथुरानाथतर्कवागीशः ( रामतर्कालंकारात्मजः )

६७ ( ६ ) आलोकः—जयरामभट्टाचार्यः ।

६८ ( ७ ) हनुमदीया—हनुमान् ।

६९ ( ८ ) जागदीशी—जगदीशभट्टाचार्यः ।

७० ( ९ ) व्याख्या—महेश्वरः ।

७१ (१०) व्याख्या—रघुदेवभट्टाचार्यः ।

७२ (११) रश्मिचक्रम्—म. म. गोकुलनाथमैथिलः ।

७३ (१२) मणिसारः—गोपीनाथः ।

७४ (१३) चिन्तामणिपरीक्षा—पद्मनाभः ( बलभद्रात्मजः ) ।

७५ (१४) व्याख्या—भवानन्दः ।

७६ (१५) दर्पणम्—रामानुजदीक्षितः ।

७७ (१६) तर्कचूडामणिः—धर्मराजाध्वरी ।

आलोक(१४)स्य टीकाः कथ्यन्ते—

७८ ( १ ) मथुरानाथी—मथुरानाथतर्कवागीशभट्टाचार्यः ।

७९ ( २ ) गदाधारी—गदाधरभट्टाचार्यचक्रवर्ती ।

८० ( ३ ) आलोकरहस्यम्—न्यायकुमुदिनीपतिर्गोपीनाथः ।

८१ ( ४ ) आलोकविवेकः—गुणानन्दविद्यावागीशभट्टाचार्यः ।

८२ ( ५ ) आलोकरहस्यम्—म. म. रघुपतिः ।

तत्त्वचिन्तामणिव्याख्यानस्य दीधितेः(१५)टीकाः कथ्यन्ते—

८३ ( १ ) मथुरानाथी—मथुरानाथतर्कवागीशः ।

८४ ( २ ) भवानन्दी—म. म. भवानन्दो न्यायपञ्चाननन्यायसिद्धान्त-तर्कवागीशभट्टाचार्यः ।

८५ ( ३ ) जागदीशी—न्यायवाचस्पतिर्जगदीशतर्कालंकारभट्टाचार्यः ।

८६ ( ४ ) गदाधरी ( संगतिनाम्नी )—गदाधरभट्टाचार्यचक्रवर्ती ।

८७ ( ५ ) दीधितिव्याख्या—न्यायवाचस्पतिभट्टाचार्यः (?) ( विद्यानिवाससूनुः ) ।

८८ ( ६ ) व्याख्या—जयरामन्यायपञ्चाननतर्कालंकारभट्टाचार्यः ।

८९ ( ७ ) व्याख्या—काशीनाथः ।

९० ( ८ ) रौद्री—रुद्रभट्टाचार्यः ।

९१ ( ९ ) व्याख्या—महेशः ।

९२ (१०) विद्योतम्—म. म. गोकुलनाथः ।

९३ (११) प्रवेशः—विश्वेश्वरपण्डितः पर्वतीयः ।

९४ सर्वोपकारिणी प्रवेशो वा (भवानन्दीव्याख्या)—महादेवो मुकुन्दपण्डितात्मजः पुण्यस्तम्भनिवासी (पुणतांबेकर)

९५ संगतिविवृतिः ( गदाधरीव्याख्या )—आर्डे इत्युपनामकः कृष्णंभट्टः ( काशीस्थः )।

९६ न्यायरत्नम् ( गदाधरीटिप्पणम् )—पर्वते इत्युपनामको रघुनाथशास्त्री पुण्यग्रामस्थरामानुजमतानुयायिराघवाचार्याणां शिष्यः ।

तर्कामृत(२१)स्य टीकाः कथ्यन्ते—

९७ ( १ ) चषकः —गङ्गाराम जडी ( नारायणपुत्रः नीलकण्ठशिष्यः दिनकरपुत्र्याः पुत्रः )

९८ ( २ ) तर्कामृततरङ्गिणी—मुकुन्दः ।

९९ ( ३ ) तर्कामृतदर्पणम्— ०

तर्कभाषा(२५)टीकाः कथ्यन्ते—

१०० ( १ ) तर्कभाषाटीका—गोवर्धनमिश्रः ( केशवमिश्रशिष्यः बलभद्र–विजयश्री–पुत्रः पद्मनाभ–विश्वनाथ–बन्धुः )

१०१ ( २ ) टीका—माधवभट्टः ।

१०२ ( ३ ) प्रकाशिका—चिन्नुभट्टः सहजसर्वज्ञपुत्रः ( स च विजयनगरे हरिहरराज्यसमये आसीत् ) ।

१०३ ( ४ ) प्रकाशिका ( भावार्थदीपिका )—म. म. गौरीकान्तभट्टाचार्यः ।

१०४ ( ५ ) प्रकाशिका—म. म. कौण्डिन्यदीक्षितः ।

१०५ ( ६ ) प्रकाशिका—म. म. बलभद्रः (त्रिपाठी विष्णुदासतनुजः)

१०६ ( ७ ) तर्कभाषाभावः—रौंबिलवेंकटबुद्धः (धः) ।

१०७ ( ८ ) तर्कभाषाव्याख्या—मुरारिः ( गङ्गाधरपुत्रः ) ।

१०८ ( ९ ) तर्कभाषावृत्तिः—सिद्धचन्द्रगणिः ( भानुचन्द्रगणिशिष्यः जैनः )

१०९ (१०) युक्तिमुक्तावली—नागेशभट्टः (?) ।

११० (११) तर्कभाषाव्याख्या—माधवाचार्यः ।

तार्किकरक्षा(२६)याष्टीकाः कथ्यन्ते—

१११ ( १ ) सारसंग्रहः— ०

११२ ( २ ) निष्कण्टका—मल्लिनाथः ।

११३ ( ३ ) न्यायकौमुदी—विनायकभट्टः ।

११४ तार्किकरक्षाव्याख्याव्याखयानम्—हरिहरः ।

न्यायसिद्धान्तमञ्जर्याः(२८)टीकाः कथ्यन्ते—

११५ ( १ ) तर्कप्रकाशः ( शितिकण्ठी )—श्रीकण्ठदीक्षितः ( विश्वनाथात्मजः ) ।

११६ ( २ ) व्याख्या—श्रीकृष्णन्यायवागीशभट्टाचार्यः ।

११७ ( ३ ) न्यायरत्नावली— ०

११८ ( ४ ) न्यायमञ्जरीप्रकाशः—भास्करः ( लौगाक्षीत्युपनामकः मुद्गलात्मजः )

११९ ( ५ ) न्यायसिद्धान्तमञ्जरीसारः—यादवः ( नृसिंहात्मजः ) ।

प्रक्षेपाद्यनुस्फोटनपर्यन्तस्तत्तत्क्रियाकलापः । यदाह दुर्गः । क्रियत इति क्रिया । सा च पूर्वापरीभूतावयवैव इति ( श० प्र० श्लो० १०५ टी० पृ० १६३ ) । स च पाकः स्थालीमार्जनाधःसंतापनाद्योदनपरीक्षान्तो व्यापारसमूहः इति ( वाच० ) । [ घ ] विक्लित्त्यनुकूलव्यापारः पाकः इति शाब्दिका आहुः । विक्लित्तिः इति मण्डनाचार्य आह । २ रसास्वादप्रभेदः पाकः इत्यालंकारिका आहुः ( प्रतापरु० ) । ३ व्यक्तीकरणम् । शिष्टं तु पचधात्वर्थे द्रष्टव्यम् ।

**पाठः**—कण्ठताल्वाद्यभिघातः । यथा यजमानं मन्त्रं पाठयतीत्यादौ धात्वर्थः ( ग० व्यु० का० २ पृ० ४७ ) । पाठस्य चतुर्दश दोषा यथा । शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् । विस्वरं विरसं चैव विश्लिष्टं विसमाहतम् ॥ काकस्वरं निरसितं तथा स्थानविवर्जितम् । व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश ॥ इति ( वाच० ) । अध्ययनक्रमो यथा आचम्य प्रयतो नित्यमधीयीत उदङ्मुखः । उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् ॥ इति । अध्यापनक्रमो यथा । अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ( कूर्मपु० उ० अ० १३ ) ( वाच० ) । अत्राधिकं च द्वितीया कर्मत्वम् इत्यादिशब्देषु संपादितम् तत्र दृश्यम् ।

**पाणिनिः**—पाणिनिनामकः प्रसिद्धो मुनिविशेषः । स च व्याकरणशास्त्रे अष्टाध्यायीरूपसूत्रपाठम् गणपाठम् धातुपाठम् लिङ्गानुशासनम् शिक्षां चेति ग्रन्थपञ्चकं चकार । अत्रोच्यते । येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ इति । व्याकरणशास्त्रप्रयोजनं तु निःश्रेयसम् इति । पाणिनिमतं च सर्वदर्शनसंग्रहमहाभाष्यकैयटादौ प्रतिपादितम् इति । अत्र प्रयोजनं द्विविधम् । मुख्यम् गौणं च । तत्र मुख्यं निःश्रेयसम् । गौणं तु रक्षोहागमलघ्वसंदेहाः प्रयोजनम् इति महाभाष्योक्तं ( पृ० १ ) द्रष्टव्यम् ।

**पातः**—१ पतनम् । यथा दृष्टिपातः बाणपातः सूत्रपातः इत्यादि । २ ज्योतिर्विदस्तु रविभिन्नग्रहाणां दक्षिणोत्तराकर्षकः अदृश्यरूपः कालमूर्तिरूपः भचक्रस्थितो जीवविशेषः इत्याहुः ( सू० सि० ) ( वाच० ) ।

**पातकम्**—[क] पातित्यजनकदुरदृष्टप्रयोजकक्रियाविशेषः । यथा गोब्राह्मणवधादि पातकम् । अत्र महापातकान्युच्यन्ते ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ इति (मनु० अ० ११ श्लो० ५५) । उपपातकानि तु गोवधोयाज्यसंयाज्यपारदार्यात्मविक्रयाः । गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥ इत्यादि (मनु० अ० ११ श्लो० ५९–६६) । [ख] पापजनकं कर्म ।

**पातालम्**—एकषष्ट्यधिकशतत्रयपरिमिता संख्या (अतलशब्दे दृश्यम्) ।

**पानम्**—१ द्रवद्रव्यस्य गलाधःसंयोजनम् । यथा पानीयं पातुमिच्छामि त्वत्तः कमललोचने इत्यादौ । २ रक्षणम् । यथा पाहि मां भवसागरात् इत्यादौ । ३ निःश्वासः (वाच०) ।

**पापम्**—१ (गुणः) वेदैकप्रतिपाद्योनिष्टसाधनमदृष्टविशेषः । अधिकं तु अधर्मशब्देनुसंधेयम् । २ सत्कर्मपुद्गलाः पुण्यं पापं तस्य विपर्ययः (सर्व० सं० पृ० ८७ आर्ह०) ।

**पारदः**—संसारस्य परं पारं दत्तेसौ पारदः स्मृतः (सर्व० सं० पृ० २०२ रसेश्व०) ।

**पारमार्थिकत्वम्**—१ प्रमाविषयत्वम् । यथा घटपटादीनां पारमार्थिकत्वम् । २ [क] कालत्रयसंबन्धित्वम् । [ख] केचिद्वेदान्तिनस्तु त्रिकालाबाध्यत्वम् । यथा ब्रह्मणस्तत्सत्तायाश्च पारमार्थिकत्वम् इत्याहुः । अत्रेदं ज्ञेयम् । अपारमार्थिकत्वं तु पारमार्थिकत्वाभाव एव । यथा खपुष्पशशशृङ्गकूर्मरोमवन्ध्यापुत्रादीनामपारमार्थिकत्वम् इति । ३ निःश्रेयससाधनत्वम् इति कर्मज्ञा आहुः । ४ स्वाभाविकत्वम् इति काव्यज्ञा आहुः ।

**पारिणामिकः**—कर्मोपशमाद्यनपेक्षः सहजो भावश्चेतनत्वादिः पारिणामिकः (सर्व० सं० पृ० ६९ आर्ह०) ।

**पारिभाषिकम्**—(शब्दः) आधुनिकसंकेतेनार्थबोधकं पदम् । यथा

---

1 अयाज्येति पदच्छेदः ।

शास्त्रकारादिसंकेतितं सव्यभिचार अप्राप्तकाल नदी वृद्धि इत्यादिपदं पारिभाषिकम् ( ग० शक्ति० पृ० ३ ) ।

**पारिभाषिकी संज्ञा**—(रूढनाम) उभयावृत्तिधर्मावच्छिन्नसंकेतवती संज्ञा। यथा आकाशडित्थादिः । सा हि द्वितयावृत्तिनैव शब्दादिना रूपेण तदाश्रयमभिधत्ते ( श० प्र० श्लो० २१ टी० पृ० २५ ) । केचित्तु यत्रार्थे यन्नामाधुनिकसंकेतवत् तदेव तत्र पारिभाषिकम् । यथा पित्रादिभिः पुत्रादौ संकेतितं चैत्रादि । यथा वा शास्त्रकृद्भिः सिद्ध्यभावादौ संकेतितं पक्षतादिपदम् इत्याहुः ( श० प्र० श्लो० २२ टी० पृ० २६ ) । अत्र केचिदित्यस्य ये जात्यवच्छिन्नसंकेतवतामपि चैत्रादिपदानां पारिभाषिकत्व-माहुः ते इत्यर्थः ।

**पारिमाण्डल्यम्**—अणुपरिमाणम् ( मु० १ साधर्म्य० ) ( प्रशस्त० पृ० १५ ) ।

**पार्थिवः**—१ पृथिवीकारणकः । यथा शरीरमस्मदादीनां पार्थिवम् (त० सं०) इत्यादौ । अत्रार्थे पृथिव्या विकारः पार्थिवः इति विग्रहो द्रष्टव्यः । २ राजा इति काव्यज्ञा आहुः । अत्रार्थे पृथिव्या ईश्वरः पार्थिवः इति विग्रहो द्रष्टव्यः ।

**पाशः**—पाशश्चतुर्विधः मलकर्ममायारोधशक्तिभेदात् ( सर्व० सं० पृ० १८७ शै० ) ।

**पाषण्डी**—वेदबाह्यागमविहितकर्मकारी (पुरु० चि० पृ० २०५)।

**पिठरपाकवादी**—( नैयायिकः ) घटपटादिः कार्यकारणसमुदायोपि पच्यते न तु केवलं परमाणव एव पच्यन्ते इति यो मन्यते सः ( वै० उ० ७।१।६ ) । यथा गौतमप्रधाना नैयायिकाः पिठरपाक-वादिनः । एतन्मते च पूर्वघटनाशं विनैवावयविन्यवयवेषु परमाणुपर्यन्तेषु च पाकेनैव युगपद्रूपान्तराद्युत्पत्तिः इति ( त० दी० १ पृ० १३ ) । अतिशयवेगवता तेजसा परमाणूनामभिघातसंयोगेपि तस्य नियमत आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियाजनकत्वे मानाभावेन अवयवि-न्यपि पाकस्वीकार उचितः । अत एव सोयं घटः इति प्रत्यभिज्ञा

संगच्छते । अन्त्यावयविनाशाद्यकल्पनेन लाघवं च इति ( नील० १ पृ० १३ )। घटादिकं सच्छिद्रमेव । अन्यथा तदन्तर्गततण्डुलादेः पाको न स्यात् । अतः एकदैव परमाण्वादिघटपर्यन्तेषु घटनाशं विना पाकेनैव रूपाद्युत्पत्तिः इति ज्ञेयम् ( सि० च० १ पृ० १६ )।

**पिठरम्**—कार्यकारणसमुदायः (अवयवावयविसमुदायः) घटपटादिः । यथा पिठरपाकवादिनो नैयायिकाः इत्यादौ ।

**पिण्डीभावः**—[ क ] चूर्णादेर्धारणाकर्षणहेतुभूतो विलक्षणसंयोगः ( न्या० बो० १ पृ० ६ ) ( नील० १ पृ० १४ ) । [ ख ] फूत्कारादिहेतुकदेशान्तरनिर्गमप्रतिबन्धकोवयवानां संयोगविशेषः ( वाक्य० १ पृ० ९ )। यथा चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः ( त० सं० ) इत्यादौ पिण्डीभावः ।

**पितृत्वम्**—१ [ क ] श्राद्धोद्देश्यत्वम् । [ ख ] सपिण्डीकरणोत्तरश्राद्धजन्यफलभागित्वम् ( कृष्ण० ) । यथा श्राद्धादौ पितृपितामहप्रपितामहाः शालङ्कायनगोत्राः वसुरुद्रादित्यान्तर्गतप्रद्युम्नसंकर्षणवासुदेवाः इत्यादौ । अत्रोक्तं याज्ञवल्क्येन वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः । प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥ इति ( याज्ञ० स्मृ० अ० १ श्लो० २६८ ) । २ जनकपुंस्त्वम् । यथा चैत्रस्य पिता इत्यादौ पितृत्वम् ( त० कौ० ) ( त० प्र० ख० ४ पृ० ५९ ) । एवम् जनकस्त्रीत्वं मातृत्वम् इत्यादिकमूह्यम् ।

**पीलुः**—परमाणुः ( वै० उ० ७।१।६) । यथा पीलुपाकवादिनो वैशेषिकाः इत्यादौ ।

**पीलुपाकवादी**—( वैशेषिकः ) पीलवः परमाणवः । त एव स्वतन्त्राः पच्यन्ते । तत्रैव पूर्वरूपनाशाग्रिमरूपाद्युत्पत्तिः । कारणगुणप्रक्रमेण चावयविनि रूपाद्युत्पद्यते इति यो मन्यते सः ( वै० उ० ७।१।६ ) । यथा कणादप्रधानाः पीलुपाकवादिनः । अधिकं च पाकशब्दे दृश्यम् । एतन्मते च परमाणुष्वेव पाकः न द्व्यणुकादौ । आमनिक्षिप्ते घटे श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्तौ पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः ।

तत्र परमाणुरूपे परमाणवः समवायिकारणम्। तेजःसंयोगः असमवायिकारणम्। अदृष्टादिकं निमित्तकारणम् इति। द्व्यणुकादिरूपे तु कारणरूपमसमवायिकारणम् इति च ज्ञेयम् (त० दी० १ पृ० १३)। अयमाशयः। अतिवेगवता तेजसा परमाणूनामभिघातसंयोगे सत्यवश्यं तेषु क्रिया जायते। ततो विभागः। तत आरम्भकसंयोगनाशे सत्यवश्यं यावदवयविनाशः। ततः स्वतन्त्रेषु परमाणुषु रूपान्तरोत्पत्तौ पुनरदृष्टादिघटितसामग्रीवशात्परमाणुषु क्रियाविभागादिक्रमेण यथावस्थितमहावयविपर्यन्तमुत्पत्तिः इति (नील० १ पृ० १३)। अयं भावः। आमनिक्षिप्ते घटे हुताशनसंयोगात्परमाण्वादिकपालपर्यन्तावयवेषु क्रिया। ततः परस्परविभागः। ततः परस्परसंयोगनाशः। ततः असमवायिकारणनाशाद्द्रव्यनाशः इति नियमेन श्यामघटनाशे शिष्टाः परमाणवः पच्यन्ते। तत्र पाकेन रूपादिचतुष्टयोत्पत्तिः। ततः परमेश्वरेण सर्गादाविव द्व्यणुकादिक्रमेण पूर्ववद्रक्तघटो निर्मीयते। परमाणुरूपेण द्व्यणुकरूपं जन्यते इत्येवं क्रमः। अन्यथा घटस्य दृढतरत्वे हुताशनप्रवेशासंभवाद्रूपाद्युत्पत्तिर्न स्यात् इति (सि० च० १ पृ० १६)।

**पुंलिङ्गम्**—(नाम) [क] पुंलिङ्गत्वेन परिभाषितम्। यथा घटोस्तीत्यादौ घटशब्दः पुंलिङ्गः। पुंलिङ्गत्वेन परिभाषायाः प्रयोजनं च पदसंस्कारः। स च तटः इत्यादौ पुंस्त्वेन सुबादिसद्भावः (श० प्र० श्लो० ५३ टी० पृ० ६८)। [ख] क्वचित् विलक्षणसंस्थानरूपपुंस्त्वविशिष्टवाचकम्। यथा न विप्रोध्ययनं त्यजेदित्यादौ। अत्र अलुप्तेन सुपैव (न तु प्रकृत्या) उपस्थितं विलक्षणसंस्थानरूपं पुंस्त्वं विप्रेनुभूयते इति ज्ञेयम् (श० प्र० श्लो० ५३ टी० पृ० ६९)।

**पुच्छम्**—(नाडिका) मुखे पञ्च गले त्वेका वक्षस्येकादश स्मृताः। नाभौ चतस्रः षट् कट्यां तिस्रः पुच्छाख्यनाडिकाः॥ (पु० चि० पृ० ३१०)।

**पुण्यम्**—१ (गुणः) धर्मवदस्यार्थोनुसंधेयः। यथा तस्मादात्मकृतं पुण्यं वृथा न परिकीर्तयेत् इति (देवलः) क्षीणे पुण्ये मर्त्यलोकं विशन्ति (श्रुतिः) तद्यथेह कर्मचितो लोकः क्षीयते एवममुत्र पुण्यचितो लोकः

क्षीयते ( श्रुतिः ) इत्यादौ पुण्यम् । २ लग्नावधिकं सप्तमस्थानम् इति मौहूर्तिका आहुः । ३ मेषकर्कटतुलामकररूपो राशिः इति ज्योतिर्विद आहुः । ४ सत्कर्मपुद्गलाः पुण्यम् ( सर्व० सं० पृ० ८७ आर्ह० ) ।

**पुद्गलः**—१ परमाणुः । २ बौद्धास्तु द्व्यणुकादिपदार्थविशेषः इत्याहुः । स्पर्शरसगन्धवर्णवन्तः पुद्गलाः । ते च द्विविधाः । अणवः स्कन्धाश्च ( सर्व० सं० पृ० ७१ आर्ह० ) । अत्रोक्तम् पूरणाद्गलनाद्देहे पुद्गलाः परमाणवः । इति ( विष्णुपु० ) । ३ सुन्दराकारः इति काव्यज्ञा आहुः ( वाच० ) ।

**पुनः**—( अव्ययम् ) १ द्वितीयवारम् । २ अप्रथमः । ३ भेदः । ४ विशेषः ( गणर० ) ( अमरः ) । ५ अधिकारः । ६ पक्षान्तरम् ( वाच० ) ।

**पुनरुक्तम्**—( निग्रहस्थानम् ) [ क ] शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ( गौ० ५।२।१४ ) । अन्यत्रानुवादाच्छब्दपुनरुक्तमर्थपुनरुक्तं वा । तेन पुनरुक्तं शब्दपुनरुक्तार्थपुनरुक्तभेदेन द्विविधम् इति बोध्यते । नित्यः शब्दः नित्यः शब्दः इति शब्दपुनरुक्तम् । अर्थपुनरुक्तम् नित्यः शब्दः निरोधधर्मको ध्वानः इति ( वात्स्या० ५।२।१४ ) । अत्रायमर्थः । पुनर्वचनं पुनरुक्तम् । तस्य विभागार्थं शब्दार्थयोः इति । तेन शब्दपुनरुक्तम् अर्थपुनरुक्तं च लभ्यते । अनुवादेतिव्याप्तिवारणाय अन्यत्रानुवादात् इति । अनुवादस्तु व्याख्यारूपः सप्रयोजनक एव इति ( गौ० वृ० ५।२।१४ ) । [ ख ] अनुवादान्यत्वे सति निष्प्रयोजनं पुनरभिधानम् ( गौ० वृ० ५।२।१४ ) ( दि० १ ) । [ ग ] अनुवादं विना कथितस्य पुनः कथनम् ( नील० पृ० ४५ ) ।

**पुमर्थत्वम्**—शास्त्रजन्यज्ञानाजन्येच्छाविषयसाधनत्वम् ( जै० सू० वृ० अ० ४ पा० १ सू० २ ) ।

**पुमान्**—१ पुरुषः । अत्र पुंस्त्वस्वरूपं तु यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् । पुमान् स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः ॥ इति ( मिता० अ० १ श्लो० ५५ ) । अत्रायं विशेषः । बिन्दुरेको विशेद्गर्भमुभयात्मा क्रमादसौ । रजोधिका भवेन्नारी भवेद्रेतोधिकः पुमान् ॥ उभयोः सम-

तायां तु नपुंसकमिति स्मृतम् इति (शा० ति०)। पुमान् पुंसोधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः। समेपुमान् पुंस्त्रियौ वा क्षीणेल्पे च विपर्ययः॥ इति च (मनु० अ० ३ श्लो० ४९)। २ मनुष्यत्वजातिविशिष्टमात्रम् (अमर० २।६।१)। सत्त्वप्रधानत्रिगुणकार्यः शब्दसंस्कारविशेषयुक्तः शब्दः पुमान् इति शाब्दिका आहुः (वाच०)।

**पुराकल्पः**—१ (अर्थवादः) [क] ऐतिह्यसमाचरितो विधिः (वात्स्या० २।१।६३)। [ख] ऐतिह्यसमाचरिततया कीर्तनम्। यथा तस्माद्वा एतेन पुरा ब्राह्मणा बहिः पावमानं सामस्तोममस्तौषन् यज्ञं प्रतनवामहे इत्येवमादिः (गौ० वृ० २।१।६३) (वात्स्या० २।१।६३)। २ प्राचीनः कल्पः। यथा श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशुः। येनायजन्त यज्वानः पुण्यश्लोकपरायणाः॥ इत्यादौ (भार० शान्ति० दानधर्मे०)। ३ बहुकर्तृकः विधिः पुराकल्पः (जै० सू० वृ० अ० ६ पा० ७ सू० २६)।

**पुराणम्**—१ पुरातनम्। यथा पुराणपत्रापगमादनन्तरं लतेव संनद्धमनोज्ञपल्लवा (रघु० ३।७) इत्यादौ। २ पञ्चलक्षणात्मकः शास्त्रविशेषः। यथा वेदव्यासकृतान्यष्टादश पुराणानि। तथोक्तम् सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्॥ इति। अष्टादशपुराणानां कर्ता सत्यवतीसुतः। पुराणानि च सात्त्विकराजसतामसभेदेन विभक्तानि पद्मपुराणे। यथा मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च। आग्नेयं च षडेतानि तामसानि निबोधत॥ इति। वैष्णवं नारदीयं च तथा भागवतं शुभम्। गारुडं च तथा पाद्मं वाराहं शुभदर्शने॥ सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै इति। ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च। भविष्यं वामनं ब्राह्मं राजसानि निबोधत॥ इति (पद्मपु० उ० ख० अ० ४३)। तत्र प्रतिपाद्यानामेव सात्त्विकादिकारणत्वमाह। अग्नेः शिवस्य माहात्म्यं तामसेषु च कथ्यते। ब्रह्मणस्तत्पुराणस्य माहात्म्यं राजसेषु च॥ सात्त्विकेष्वधिकं तत्तद्विष्णोर्माहात्म्यमुत्तमम्। तथैव योगसंसिद्धा गमि-

ष्यन्ति परां गतिम् ॥ इति (मत्स्यपु०) (पद्मपु० उ० अ० ४३) (वाच०)। पुराणानां संख्या तु (४०००००) चत्वारि लक्षाणि। तदुक्तं श्रीभागवते तत्र (१) ब्राह्मम् १००००। (२) पाद्मम् ५५०००। (३) वैष्णवम् २३०००। (४) शैवम् २४०००। (५) श्रीमद्भागवतम् १८०००। (६) नारदम् २५०००। (७) मार्कण्डेयम् ९०००। (८) आग्नेयम् १५४००। (९) भविष्यम् १४५००।(१०) ब्रह्मवैवर्तम् १८०००। (११) लैङ्गम् ११०००। (१२) वाराहम् २४०००। (१३) स्कान्दम् ८११००।(१४) वामनम् १००००। (१५) कौर्मम् १७०००। (१६) मात्स्यम् १४०००।(१७)गारुडम् १९०००।(१८)ब्रह्माण्डम् १२०००। इति (भागवते स्क० १२ अ० १३ श्लो० ४–८)।

**पुरुषः**—अनुभयात्मकः पुरुषः। तदुक्तम् न प्रकृतिर्न विकृतिः पुरुषः (सर्व० सं० पृ० ३२० सांख्य०)।

**पुरुषार्थः**—[क] बलवद्द्वेषाविषयः (त० प्र० १)। [ख] यज्ज्ञातं सत्स्ववृत्तितयेष्यते सः (मु० गु० इच्छानि० पृ० २२१)। यथा सुखं दुःखाभावश्च पुरुषार्थः। अयमेव स्वतः पुरुषार्थः इत्युच्यते। तल्लक्षणं चेतरेच्छानधीनेच्छाविषयत्वम् (मु० गु० इच्छानि० पृ०२२१)। पुरुषार्थशब्दस्य पुरुषस्य अर्थः प्रयोजनम् इति व्युत्पत्तिर्द्रष्टव्या। धर्मार्थकाममोक्षाश्च पुरुषार्था उदाहृताः इति (अग्निपु०)। [ग] पुरुषप्रीतये विधीयमानः पुरुषार्थः (जै० न्या० अ० ४ पा० १ अधि० २)। [घ] यस्मिन्स्वर्गादिसुखविशेषे पश्वादिसुखसाधने च लब्धे प्रीतिः कृतार्थोस्मीति वृत्तिस्तत्साधनं पुरुषार्थः (जै० सू० वृ० अ० ४ पा० १ सू० २)। चार्वाकमते अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः (सर्व० सं० पृ० ३ चार्वा०)। सांख्यमते सत्त्वपुरुषान्यताख्यातिः पुरुषार्थः (सर्व० सं० पृ० ३९२ शां०)। पुरुषैरर्थ्यत इति व्युत्पत्त्या निःशेषदुःखोपशमलक्षितं परमानन्दैकरस्यं च पुरुषार्थशब्दस्यार्थः (सर्व० सं० पृ० ४०१ शां०)। मध्वमते च भक्तिरपि पुरुषार्थः।

**पुर्यष्टकम्**—१ स्यात्पुर्यष्टकमन्तःकरणं धीकर्म करणानि (सर्व० सं० पृ० १८४ शै०)। २ शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चकम्। बुद्धिर्मनस्त्वहंकारः पुर्यष्टकमुदाहृतम् ॥ (सर्व० पृ० १८५ शै०)।

**पुष्करम्**—अमा सोमे तथा भौमे गुरुवारे यदा भवेत्। तत्तीर्थं पुष्करं नाम सूर्यपर्वशताधिकम् ॥ (पु० चि० पृ० ३१७)।

**पुस्तम्**—लिप्यादिशिल्पकर्मयुतं वस्तु। यथा पुराणपुस्तकम् इत्यादि। किंच मृदा वा दारुणा वापि वस्त्रेणाप्यथ चर्मणा। लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते ॥

**पूगः**—भिन्नजातीनां भिन्नवृत्तीनामेकस्थाननिवासिनां समूहः। यथा ग्राम-नगरादयः (मिताक्षरा अ० २ श्लो० ३०)।

**पूजा**—[क] आराधना। [ख] उपासना।

**पूरकः**—(प्राणायामः) बाह्यस्य वायोरन्तर्धारणम् (सर्व० सं० पृ० ३७७ पात०)।

**पूर्णा**—पित्र्येस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते (पुरु० चि० पृ० ४०)।

**पूर्णिमा**—कलाक्षये व्यतिक्रान्ते दिवा पूर्णौ परस्परम्। चन्द्रादित्यौ पराह्णे तु पूर्णत्वात्पूर्णिमा स्मृता ॥ (पुरु० चि० पृ० ३१७)।

**पूर्वकालीनत्वम्**—[क] कालिकसंबन्धेन तत्प्रागभाववत्त्वम्। इदं च ध्वंसस्य (जन्यमात्रस्य) कालोपाधित्वपक्ष एव संगच्छते इत्यवधेयम् (ग० सार्व० पक्ष० पृ० ३८)। यथा अनुमित्यव्यवहितपूर्ववृत्ति-सिद्धिभिन्नसिद्ध्यभावमात्रं पक्षता (दीधि० २ पक्ष० पृ० २२७) इति पक्षतायाः शरीरप्रविष्टे अनुमितिपूर्वकालीनध्वंसाप्रतियोगित्वरूपे अव्य-वहितत्वरूपे शरीरे ध्वंसस्य पूर्वकालीनत्वम्। [ख] प्रागभावकाल-वृत्तित्वम्। यथा भुक्त्वा व्रजतीत्यत्र भोजने गमनप्रागभावावच्छिन्न-कालवृत्तित्वम्। [ग] तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं वा (तर्का० ४ पृ० ११)। यथा ज्येष्ठस्य पुरुषस्य कनिष्ठं पुरुषमपेक्ष्य पूर्वकालीनत्वम्। इदं च प्रागभावानभ्युपगन्तृमतेपि युज्यते इति बोध्यम् (ग० सार्व० पक्ष० पृ० ३८)।

**पूर्वत्वम्**—१ प्रागभाववत्त्वम् (ग० सार्व० पक्ष० पृ० ३८) । यथा कारणस्य कार्योत्पत्तिपूर्वक्षणवृत्तित्वम् इत्यादौ क्षणस्य पूर्वत्वम् । यथा वा फाल्गुनस्य मासस्य चैत्रात्पूर्वत्वम् । अत्र पूर्वत्वं चाद्यत्वमिति लौकिकजना वदन्ति । २ उदयगिरिसंनिहितदेशावच्छिन्नत्वम् । यथा पूर्वो ग्रामादित्यत्र । अत्र पूर्वपदार्थैकदेशे तादृशसंनिहितत्वे ग्रामाद्यवधिकत्वं पञ्चम्या बोध्यते (श० प्र० श्लो० ९३ टी० पृ० १२७) । ३ क्रियाजन्यसंयोगप्रतियोगिदेशत्वम् यथा । मुंबईतो झळकीग्रामं गच्छत उत्तरोत्तरदेशमपेक्ष्य पूर्वपूर्वदेशस्य पूर्वत्वम् ।

**पूर्वपक्षः**—१ [क] शास्त्रीयसंशयनिरासार्थप्रश्नरूपा फक्किका । [ख] सिद्धान्तविरुद्धकोटिः । [ग] अधिकरणावयवविशेषः । अत्रोक्तम् विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् इति । २ प्रतिज्ञापरपर्यायः भाषापत्ररूपः प्रथमावयवः पूर्वपक्षः । अयं चाभियोग इत्युच्यते (फिर्याद इति प्र०) । अत्रोक्तं बृहस्पतिना पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा । क्रियापादस्तृतीयस्तु चतुर्थो निर्णयस्तथा ॥ इति (वीरमित्रो० अ० २ लेख्य० पृ० ६०) ।

**पूर्ववत्**—(अनुमानम्) १ यत्र कारणेन कार्यमनुमीयते । यथा मेघोन्नत्या भविष्यति वृष्टिरिति (वात्स्या० १।१।५) (गौ० वृ० १।१।५) । अत्रार्थे पूर्ववत् इत्यत्र पूर्वं कारणम् तद्वत्तल्लिङ्गकम् इति व्युत्पत्तिर्द्रष्टव्या (गौ० वृ० १।१।५) । २ यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानम् । यथा धूमेनाग्निरिति (वात्स्या० १।१।५) । अत्र सांख्यानामयमर्थः । दृष्टस्वलक्षणसामान्यविषयं यत् तत् पूर्ववत् । पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत् । तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् । यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेनुमीयते । तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणवह्निविशेषो दृष्टो रसवत्याम् (सांख्य० कौ० का० ५ टी० पृ० १०) । ३ केवलान्वयि । यथा अभिधेयं प्रमेयत्वादित्यादि (गौ० वृ० १।१।५) । अत्रार्थे पूर्ववत् इत्यत्र पूर्वमन्वयव्याप्तिः तद्वत् इति व्युत्पत्तिर्द्रष्टव्या (गौ० वृ० १।१।५) ।

**पूर्वाह्णः**—१ पूर्वाह्णः प्रहरं सार्धं मध्याह्नः प्रहरं तथा । आतृतीयाच्चापराह्णः सायाह्नश्च ततः परः । २ अहनि त्रिधा विभक्ते पूर्वो भागः (मिताक्षरा अ० २ श्लो० ९७) ।

**पृच्छा**—[क] जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा गुरुं धर्मं पृच्छतीत्यादौ पृच्छतेरर्थः । अत्र पृच्छधात्वर्थघटके ज्ञाने गुरुवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वयः । शब्दस्य च विषयता व्यापारानुबन्धिनी । ज्ञानस्य परंपरया शब्दरूपधात्वर्थविशेषणत्वात्तदाश्रयीभूतगुरोर्गौणकर्मता । धर्मस्य च धात्वर्थविषयतया प्रधानकर्मता इति ज्ञेयम् (ग० व्यु० का० २ पृ० ४५–४६) । [ख] अभिधानावच्छिन्नव्यापारः । यथा पान्थं पन्थानं पृच्छतीत्यत्र पृच्छधात्वर्थः पृच्छा । अभिधानमिहाभिलापः । तदनुकूलव्यापारश्च केन पथा गन्तव्यम् इत्यादिप्रश्नः । तथा च पान्थनिष्ठं यत् पथोभिधानम् तदनुकूलव्यापारवान् इत्येवं तत्र बोधः (श० प्र० श्लो० ७३ टी० पृ० ११२) । [ग] केचिच्छाब्दिकास्तु जिज्ञासाविषयकज्ञानानुकूलव्यापारः । स च कथं धर्म आचरितव्यः इत्यभिलापादिः । यथा पृच्छ्यते शिष्येण गुरुर्धर्ममित्यादौ पृच्छेरर्थः इत्याहुः (वाच०) । अस्य द्विकर्मकत्वेन गौणे कर्मणि गुरौ लकारादिः । अत्र ज्ञानविषयत्वेन धर्मस्य तज्ज्ञानाश्रयत्वाच्च गुरोः कर्मत्वम् इति ज्ञेयम् । [घ] प्रश्नः इति काव्यज्ञा आहुः ।

**पृथक्त्वम्**—१ असाहित्यम् । यथा दुनोति चन्द्रात्पृथगप्यनङ्गः इत्यादौ पृथक्त्वमसाहित्यम् (ग० व्यु० का० ५ पृ० ११०) । २ (गुणः) [क] अपोद्धारव्यवहारकारणम् । तत्पुनरेकद्रव्यम् अनेकद्रव्यं च । तस्य च नित्यानित्यत्वनिष्पत्तिः संख्यावज्ज्ञेया (प्रशस्त० पृ० १६) । [ख] पृथग्व्यवहारासाधारणकारणम् पृथक्त्वत्वजातिमत् वा (त० सं०) (त० कौ०) । यथा इदमस्मात्पृथक् इत्यादौ । पृथग्व्यवहारश्च अयमस्मात् पृथक् इति व्यवहारः । तादृशव्यवहारजनकतावच्छेदकमुख्यप्रकारतावत्त्वं लक्षणम् इति (वाक्य० १ पृ० ८) । विस्तरस्तु अन्यत्र (वै० उ० ७।२।२) द्रष्टव्यः । अत्र सूत्रम् तथा पृथक्त्वम्

( वै० उ० ७।२।२ ) इति । तदर्थश्च पृथक्त्वमपि संख्यावद्गुणान्तरमेव । तत्रैकपृथक्त्वम् एकत्वसंख्यातुल्यम् । द्विपृथक्त्वादिकं च द्वित्वादि-संख्यातुल्यम् इति ( वै० वि० ७।२।२ ) । पृथक्त्वं सर्वद्रव्यवृत्ति । तथा च पृथक्त्वं द्विविधम् । एकवृत्ति अनेकवृत्ति चेति । तत्रैकपृथक्त्व-मेकवृत्ति । द्विपृथक्त्वाद्यनेकवृत्ति ( त० कौ० ) । एवं च पृथक्त्वम् एकपृथक्त्वद्विपृथक्त्वादिभेदेन बहुविधम् ( सि० च० ) । तत्रैकपृथक्त्वं नित्यगतं नित्यम् । अनित्यगतमनित्यम् ( त० कौ० ) । द्विपृथक्त्वादि च नानैकपृथक्त्वविषयकापेक्षाबुद्धिजन्यम् तन्नाशनाश्यं च इति सर्वम-नित्यमेव इति च ज्ञेयम् ( त० कौ० ) । द्वित्वाद्युत्पत्तिविनाशवद्द्विपृथक्त्वा-द्युत्पत्तिविनाशावूहनीयौ ( वै० उ० ७।२।८ ) ( वाक्य० १ पृ० ८ ) । अत्र नव्याः ( दीधितिकाराः ) मीमांसकाश्चाहुः । पृथक्त्वमन्योन्याभाव एव न तु गुणान्तरम् इति ( ग० व्यु० का० ५ पृ० ११० ) ( दि० गु० ) । अन्ये त्वाहुः । पृथक्त्वं चान्योन्याभावाद्भिन्नमेव । अभावस्य प्रतियोगिसापेक्षनिरूपणत्वात् । पृथक्त्वस्य त्ववधिनिरूप्यत्वात् इति ( न्या० ली० गुणनि० पृ० २३ ) ( ता० र० श्लो० ४५ ) ।

**पृथिवी**—( द्रव्यम् ) [ क ] गन्धसमवायिकारणम् ( मु० १ ) । तथा च सूत्रम् रूपरसगन्धस्पर्शवती पृथिवी ( वै० २।१।१ ) इति । व्यवस्थितः पृथिव्यां गन्धः ( वै० उ० २।२।२ ) इति च । [ ख ] गन्धवती ( त० सं० ) । यथा आम्रादिफलम् । गन्धवतीत्यस्य गन्धसमानाधिकरण-द्रव्यत्वव्याप्यजातिमतीत्यर्थः । तेन उत्पत्तिक्षणे घटादौ उत्पन्नविनष्टे च द्रव्ये गन्धासत्त्वेपि नाव्याप्तिः इति ( त० दी० १ ) । अत्रायं नियमः प्रथमं द्रव्यं निर्गुणमेवोत्पद्यते पश्चात्तत्समवेता गुणा उत्पद्यन्ते इति । उत्पन्नविनष्टे अव्याप्तिकथनं च बौद्धमतमनुसृत्य । तन्मते तदुत्पत्तिक्षण एव तन्नाशस्वीकारात् । नैयायिकास्तु उत्पन्नविनष्टद्रव्यं न स्वीकुर्वन्ति । एतन्मते स्थितिक्षणेपि द्रव्यस्य सत्त्वस्वीकारात् इति । पाषाणादिभस्मनि गन्धोपलम्भेन पाषाणादावपि गन्धोनुमीयते । तत्रत्यगन्धस्यानुत्कटत्वा-न्नोपलम्भः इति ज्ञेयम् ( मु० १ पृथि० पृ० ६४–६५ ) ( त० व०

पृ० १०२ ) । अत्रायं नियमः यद्द्रव्यं यद्द्रव्यध्वंसजन्यम् तद्द्रव्यं तदुपादानोपादेयम् इति । दृष्टं चैतत् खण्डपटे महापटध्वंसजन्ये ( मु० १ पृथि० पृ० ६५ ) । भस्मखण्डपटयोरवयवानां पाषाणमहापटयोरवयवानां चैक्यम् इति नियमस्याभिप्रायः । अत्र पृथिवीत्वं तु पाकजरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिः ( सर्व० सं० पृ० २१८ औलू० ) । अत्र पृथिवीत्वजातिसिद्धिप्रकारस्तु दिनकर्यादिग्रन्थेषु द्रष्टव्यः । विस्तरभयान्नोक्तः । लक्षणं च कटुरससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् गन्धसमानाधिकरण–गन्धासमानाधिकरणगुणासमानाधिकरणजात्यधिकरणद्रव्यत्वम् इत्यादि (वै० उ० २।१।१ पृ० ६५)। अत्र द्रव्यपदप्रयोजनं चिन्त्यम् । पृथिव्या अध्यात्मादिभेदा यथा पृथिवी पञ्चमं भूतं घ्राणं चाध्यात्ममुच्यते । अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम् ॥ इति ( भा० आश्व० अ० ४२ ) । [ ग ] पृथिवीत्वजातिमती । यथा घटः पृथिवी । पृथिवी द्विविधा । नित्या अनित्या च । तत्र नित्या परमाणुलक्षणा । अनित्या कार्यलक्षणा । अनित्या त्रिविधा । शरीरम् इन्द्रियम् विषयश्च ( वै० ४।२।१ ) । तत्र शरीरम् द्विविधम् योनिजम् अयोनिजं च ( वै० ४।२।५ ) । तत्र योनिजमस्मदादीनां शरीरं प्रत्यक्षसिद्धम् । अयोनिजं तु क्रिमिदंशादीनाम् । अयोनिजं च अनपेक्ष्य शुक्रशोणितं देवर्षीणां शरीरम् धर्मविशेषसहितेभ्योणुभ्यो जायते । क्षुद्रजन्तूनां यातनाशरीराणि अधर्मविशेषसहितेभ्योणुभ्यो जायन्ते ( प्रशस्त० पृ० ४ ) । इन्द्रियम् गन्धग्राहकं घ्राणम् । तच्च नासाग्रवर्ति । इदम् सर्वप्राणिनां जलाद्यनभिभूतैः पार्थिवावयवैरारब्धम् ( प्रशस्त० पृ० ४ ) । विषयः मृत्पाषाणादिर्ब्रह्माण्डान्तः । स च द्व्यणुकादिक्रमेणारब्धस्त्रिविधः । मृत् पाषाणः स्थावरश्चेति । तत्र मृत्पाषाणौ प्रसिद्धौ । स्थावरो वृक्षलतादिः ( त० कौ० ) । तत्र भूप्रदेशाः प्राकारेष्टकादयो मृद्विकाराः । पाषाणा उपलमणिवज्रादयः । स्थावरास्तृणौषधिगुल्मलताप्रतानवनस्पतयः इति ( प्रशस्त० पृ० ४ ) । पृथिव्यां चतुर्दश गुणा वर्तन्ते । रूपम् रसः गन्धः स्पर्शः संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् गुरुत्वम्

द्रवत्वम् संस्कारश्चेति ( प्रशस्त० पृ० ३ ) ( त० भा० ) ( भा० प० ) ( त० सं० ) । तत्र रूपरसगन्धस्पर्शाश्चत्वारः पृथिव्यामेव पाकजाः । अन्यत्र जलादौ अपाकजा भवन्ति । एते चत्वारः पाकजा अपाकजाश्चापि नित्यायामनित्यायां च पृथिव्यामनित्या एव भवन्तीति विज्ञेयम् ( प्र० प्र० ) ( त० सं० ) । अत्र सूत्रम् पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ( वै० ७।१।२ ) इति । एतेन नित्येषु नित्यत्वमुक्तम् ( वै० ७।१।३ ) इति च । पृथिव्यां रूपादीनां गुणानां वृत्तिस्त्वेयं विवेकः । क्षितावेव गन्धः । रूपमनेकप्रकारं शुक्लादि । रसः षड्विधो मधुरादिः । गन्धो द्विविधः सुरभिरसुरभिश्च । स्पर्शोस्या अनुष्णाशीतत्वे सति पाकजः ( प्रशस्त० पृ० ३ ) । परिमाणं परममहत्त्वातिरिक्तम् । द्रवत्वं नैमित्तिकम् । संस्कारस्तु वेगः स्थितिस्थापकश्चेति । अनित्या पृथिवी च स्थैर्याद्यवयवसंनिवेशविशिष्टा अपरजातिबहुत्वोपेता शयनासनाद्यनेकोपकारकरी च ( प्रशस्त० पृ० ३ ) । द्विविधायाः पृथिव्या रूपरसगन्धस्पर्शाश्चानित्याः पाकजाश्च ( त० भा० अर्थ० पृ० २७ ) । अनित्यपृथिव्यां विषयरूपायां पाषाणे वज्रं तु पार्थिवमपि न लोहलेख्यम् । शक्तिभेदात् । अबिन्धनविद्युत्तेजोवत् इति ( न्या० ली० पृ० १३ ) । मार्गगतधूलिः पृथिवी इति सर्वदर्शनसंग्रहे ( पृ० ७० ) उक्तम् ।

**पृथिवीकायः**—इष्टकादिः ( सर्व० सं० पृ० ७० आर्ह० ) ।

**पृथिवीकायिकः**—पृथिवी कायत्वेन येन गृहीता स पृथिवीकायिकः ( सर्व० सं० पृ० ७० आर्ह० ) ।

**पृथिवीजीवः**—पृथिवीं कायत्वेन यो ग्रहीष्यति स पृथिवीजीवः ( सर्व० सं० पृ० ७० आर्ह० ) ।

**पृषदाज्यम्**—दधिमिश्रमाज्यम् ( जै० न्या० अ० ५ पा० २ अधि० ८ ) ।

**पृष्ठस्तोत्राणि**—अभि त्वा शूर नोनुमः कया नश्चित्र आभुवत् तं वो दस्मृतीषहम् तरोभिर्वो विदद्वसुम् एतानि क्रमेण रथंतरवामदेव्यनौधसकालेय-

सामभिर्माध्यंदिनसवने गीयमानानि पृष्ठस्तोत्राणीत्युच्यन्ते ( जै० न्या० अ० १ पा० ४ अधि० ३ ) ।

**पेषणम्**—अवयवविभागेन चूर्णनम् । यथा पाटीर तव पटीयान् कः परिपाटीमिमामुरीकर्तुम् । यत् पिषतामपि नृणां पिष्टोपि तनोषि परिमलैस्तुष्टिम् ॥ इत्यत्र पिषधात्वर्थः ।

**पैतृकम्**—मघा ( मु० चि० पृ० ३५३ ) ।

**पैशाचः**—( विवाहः ) पैशाचः कन्यकाछलात् ( याज्ञवल्क्य० अ० १ श्लो० ६१ ) ।

**पौनःपुन्यम्**—[ क ] प्रकृतधात्वर्थजातीयक्रियोत्तरतादृशक्रियानन्तर्यम् । यथा पापच्यत इत्यादौ यङोर्थः पौनःपुन्यम् । अत्र निरुक्तानन्तर्यरूपो यङर्थः प्रकृत्यर्थे विशेषणत्वेनान्वेति । तेन पाकोत्तरपाकानन्तर्यवत्पाककर्ता इत्येवं वाक्यार्थः ( श० प्र० श्लो० १०८ टी० पृ० १७१ ) । [ ख ] इदानींतनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्तमानादिकृतिविषयत्वम् । यथा पापच्यत इत्यादौ यङोर्थः ( तर्का० ४ पृ० ११ ) ।

**पौरुषेयत्वम्**—सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वम् ( चि० ४ ) । यथा महाभारतादेः पौरुषेयत्वम् । वेदस्य तु मीमांसकादिमते अपौरुषेयत्वमेव ।

**पौर्णमासी**—यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी ( पुरु० चि० पृ० ३३ ) ।

**पौष्णम्**—रेवती ( मु० चि० पृ० ३५३ ) ।

**पौष्कल्यम्**—फलजननसामर्थ्यम् ( जै० न्या० अ० ४ पा० १ अधि० २ ) ।

**प्रकरणम्**—१ संगतिप्रदर्शनप्रयोजिका आकाङ्क्षा । यथा प्रकरणलाघवाय इत्यादौ ( भवा० ) । २ प्रस्तावः । ३ पक्षप्रतिपक्षौ ( साध्यतदभाववन्तौ ) ( वात्स्या० १।२।७ ) । यथा यस्मात्प्रकरणचिन्ता० ( गौ० १।२।७ ) इत्यादौ । ४ ग्रन्थसंधिविशेषः । यथा प्रथमं प्रकरणम् द्वितीयं प्रकरणम् इत्यादौ । ५ [ क ] उभयाकाङ्क्षा प्रकरणम् इति मीमांसका आहुः । अङ्गवाक्यसापेक्षं प्रधानवाक्यमित्यर्थः । अत्र शाबर-

भाष्यम् । कर्तव्यस्येतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणम् इति । यथा श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् (जै० सू० ३।३।१४) इत्यादौ । [ख] संपन्नवाक्यैकवाक्यतारूपं प्रकरणम् (जै० न्या० अ० ३ पा० ३ अधि० ४)। ६ काव्यज्ञास्तु अभिनेयनायकादिको दृश्यकाव्यविशेषः इत्याहुः । तल्लक्षणमुक्तम् । भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् । शृङ्गारोङ्गी नायकस्तु विप्रोमात्योथ वा वणिक् ॥ सापायधर्मकामार्थपरो धीरप्रशान्तकः इति (सा० द० परि० ६ श्लो० ५११) । तत्र विप्रनायकं मृच्छकटिकम् । अमात्यनायकं मालतीमाधवम् । वणिङ्नायकं पुष्पभूषितम् इति (सा० द०वृ० ६।२२५) ।

**प्रकरणसमः**—१ (जातिः) [क] उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः (गौ० ५।१।१६) । तदर्थश्च उभयसाधर्म्यात् अन्वयसहचारात् व्यतिरेकसहचाराद्वा । प्रक्रिया प्रकर्षेण क्रिया साधनम् । विपरीतसाधनमिति फलितार्थः । तत्सिद्धेः तस्य पूर्वमेव सिद्धेः इति । बाधदेशनाभासोयम् (गौ० वृ० ५।१।१६) । अत्र भाष्यम् । उभयेन नित्येन चानित्येन साधर्म्यात् । पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्येकः पक्षं प्रवर्तयति । द्वितीयश्च नित्यसाधर्म्यात् । एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्तते । अनतिवृत्तेस्तन्निर्णयानिवर्तनम् । समानं चैतन्नित्यसाधर्म्येणोच्यमाने हेतौ । तदिदं प्रकरणानतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः । समानं चैतद्वैधर्म्येपि । उभयवैधर्म्यात्प्रक्रियासिद्धेः प्रकरणसम इति (वात्स्या० ५।१।१६) । [ख] अधिकबलत्वेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानम् । यथा शब्दः अनित्यः कृतकत्वादित्युक्ते नैतदेवम् श्रावणत्वेन नित्यत्वसाधकेन बाधात् (गौ० वृ० ५।१।१६) । [ग] वाद्युक्तहेतोः साध्यविपरीतसाधकहेत्वन्तरोद्भावनम् । सत्प्रतिपक्षोदाहरणमेवात्रोदाहरणं बोध्यम् (नील० पृ० ४४) । २ (हेत्वाभासः) [क] यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः (गौ० १।२।७) । सूत्रार्थस्तु प्रकृष्टं करणं लिङ्गं परामर्शो वा । को हेतुरनयोः

साधकः एतयोः कः परामर्शः प्रमा इति वा यत्र जिज्ञासा भवतीत्यर्थः । यस्मादित्यादि तु वस्तुस्थितिमात्रम् ( गौ० वृ० १।२।७ ) । अत्र भाष्यम् । विमर्शाधिष्ठानौ पक्षप्रतिपक्षावुभावनवसितौ प्रकरणम् । तस्य चिन्ता विमर्शात्प्रभृति प्राङ्निर्णयाद्यत्समीक्षणम् । सा जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात्प्रकरणमनतिवर्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते । प्रज्ञापनं तु अनित्यः शब्दो नित्यधर्मानुपलब्धेरिति । अनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि ( वात्स्या० १।२।७ ) । अस्मिन्नभिप्राये सूत्रार्थश्च निर्णयार्थं प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात् किंतु धर्मिणः साध्यवत्त्वम् तदभाववत्त्वं वेति चिन्तां जिज्ञासां प्रवर्तयति स प्रकरणसमः इति ( गौ० वृ० १।२।७ ) । प्रकरणसमस्य लक्षणं तु तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वम् । स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शो वा ( गौ० वृ० १।२।७ ) इति । अन्यत्सर्वं सत्प्रतिपक्षवज्ज्ञातव्यम् । अत्रेदं बोध्यम् । विरोधिपरामर्शस्य च हेतुनिष्ठत्वम् एकज्ञानविषयत्वसंबन्धेन ज्ञेयम् । अन्यथा हेतोर्दुष्टत्वं न स्यात् । अयं च दशाविशेषे दोषः इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेव इति ( गौ० वृ० १।२।७ ) । [ ख ] निबन्धे तु प्रकृतसाध्यहेत्वोः किं तत्त्वम् इति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः तद्विषयः ( चि० २ हेत्वा० पृ० ९७ ) ( म० प्र० २।२७ ) । अत्र जिज्ञासा च प्रकृतसाध्यहेत्वोः कः समीचीनः इत्याकारिका ग्राह्या ( ग० सत्प्र० पृ० २३ ) । तथा च अनयोः किं तत्त्वम् इति जिज्ञासैव सत्प्रतिपक्षफलम् इति बोध्यम् ( चि० २ हेत्वा० पृ० ९७ ) ( ग० सत्प्र० पृ० २२ ) ( म० प्र० २ पृ० २७ ) । तदर्थश्च यादृशपरामर्शसहकारेण यादृशपरामर्शस्योक्तजिज्ञासाजनकत्वं तादृशपरामर्शसहिततादृशपरामर्शः इति ( ग० सत्प्र० पृ० २३ ) । अत्र च पर्वते धूमेन वह्निसाधने पर्वतो वह्निव्याप्यधूमवान् वह्न्यभावव्याप्यजलवान् इति परामर्शद्वयसंवलनदशायां प्रकृतो धूमो हेतुः सत्प्रतिपक्षितः इति व्यवह्रियत इत्यनुभवमनुसृत्येदं विज्ञेयम् । [ ग ] यस्य प्रतिपक्षभूतं हेत्वन्तरमस्ति स प्रकरणसमः । स एव

सत्प्रतिपक्ष उच्यते । यथा शब्दो नित्यः अनित्यधर्मानुपलब्धेः इति शब्दः अनित्यः नित्यधर्मानुपलब्धेः इति च ( त० भा० पृ० ४९ ) । अत्र च विपरीतार्थसाधकं समानबलमनुमानान्तरं प्रतिपक्ष इत्युच्यते । यथा शब्दः अनित्यः नित्यधर्मानुपलब्धेः इति । यत्पुनरतुल्यबलम् न स प्रतिपक्षः । तथाहि । विपरीतार्थसाधकानुमानं त्रिविधम् । उपजीव्यम् उपजीवकम् अनुभयं चेति । तत्राद्यम् बाधकम् । बलवत्त्वात् । यथा अनित्यः परमाणुर्मूर्तत्वादिति । अस्य हेतोः परमाणुसाधकानुमानं नित्यत्वं साधयदपि न प्रतिपक्षः । किंतु धर्मिग्राहकं ( परमाण्वात्मकस्यानित्यत्वरूपसाध्यधर्मिणो ग्राहकम् ) प्रमाणं बाधकम् । उपजीव्यत्वेन बलवत्त्वात् । नहि प्रमाणेनागृह्यमाणे धर्मिणि परमाणौ परमाण्वनित्यत्वानुमानमिदं संभवति । आश्रयासिद्धेः इति । तथा च तारतम्यपक्षकानुमानं न समानबलम् । किंतु अधिकबलम् इति तत् परमाण्वनित्यत्वानुमानं प्रति बाधत एवेति न तत् प्रतिपक्षः इति भावः । परमाणुसाधकानुमानं च अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तम् । परिमाणतारतम्यत्वान्महत्परिमाणतारतम्यवत् इति ( त० भा० पृ० ४९ ) । द्वितीयं दुर्बलत्वाद्बाध्यम् । यथा इदमेवानित्यत्वानुमानं स्यात् । तृतीयं तु सत्प्रतिपक्षः । तुल्यबलवत्त्वात् इति ( त० भा० पृ० ४९ ) । [ घ ] प्रतिरुद्धः प्रकरणसमः स्यात्प्रतिसाधनैः ( ता० र० श्लो० ८३ ) । [ ङ ] तुल्यत्वमभ्युपेत्यैव परहेतोः स्वहेतुना । बाधेन प्रत्यवस्थानं परस्य प्रक्रियासमः ॥ ( ता० र० २ श्लो० ११७ ) ।

**प्रकारः**—१ सामान्यस्य भेदको विशेषः ( लौ० भा० टी० पृ० ८ ) । यथा द्रव्यं नवविधमित्यादौ पृथिवीत्वादिकं द्रव्यस्य प्रकारः । यथा वा प्रकारान्तरेण विभजते इत्यादौ । २ वक्ष्यमाणप्रकारतावान् ( मु० १ पृ० ११८ ) । यथा दण्डवान्पुरुषः इति वाक्यजन्यबोधे दण्डः प्रकारः । ३ विशेषणम् । यथा स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरूपकत्वं सर्वांशे याथार्थ्यम् ( ग० सामा० ) इत्यादौ प्रकारो विशेषणम् । क्वचित् उपलक्षणमपि प्रकारः ( चि० ) । ४ क्वचित् सादृश्यमपि प्रकारशब्दार्थः । यथा प्रभृतिग्रहणं प्रकारार्थम् (सि० कौ० पृ० २०) इत्यादौ ।

**प्रकारता**—१ ( विषयता ) [ क ] विशेषणत्वापरनामा विलक्षणविषयताविशेषः ( नील० १ पृ० १७ ) । यथा अयं घटः इति ज्ञाने विशेषणस्य घटत्वादेर्विशेषणत्वापरनामा विषयताविशेषः ( न्या० म० १ पृ० ४ ) । [ ख ] अन्ये तु भासमानवैशिष्ट्यप्रतियोगित्वम् ( न्या० म० १ पृ० ५ ) । संसर्गावच्छिन्नविषयतेति यावत् ( नील० १ पृ० १७ ) ( सि० च० ) । अत्र विशेष्यतासंसर्गतयोस्तु किंचित्संबन्धावच्छिन्नत्वमप्रामाणिकम् इति सिद्धान्तोनुसर्तव्यः । तथा च संसर्गावच्छिन्नत्वं प्रकारताया एव इति भावः । यथा अयं घटः इत्यत्र घटत्वस्य वैशिष्ट्यं भासते तत्प्रतियोगि च घटत्वम् इत्याहुः ( न्या० म० १ पृ० ५ ) । [ ग ] अपरे तु ज्ञायमानविशेषणप्रतियोगिकसंसर्गावच्छिन्नविषयत्वम् इत्याहुः ( वाच० ) । २ विषयतानात्मिका प्रतियोगित्वादिनिरूपितावच्छेदकतातुल्यावच्छेदकताविशेषरूपा प्रकारता इति कश्चिदाह ( ग० बाध० पृ० २ ) । यथा पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं बाधः ( चि० २ हेत्वा० पृ० १०३ ) इत्यत्र तादृशविषयत्वनिरूपिता अभावनिष्ठा प्रकारता । ह्रदो वह्निमान् धूमादित्यादौ पक्षः साध्याभाववान् इति ज्ञाने पक्षनिष्ठप्रमाविषयत्वस्य प्रकारः साध्याभावः इति लक्षणसमन्वयः ( दीधि० २ पृ० २१८ ) । सप्रकारकत्वं विषयताया एव न तु ज्ञानस्य इत्यतिरिक्तविषयतावाद्येकदेशिमताभिप्रायकमतिसूक्ष्मतरमेतत् । प्रकारताश्रयश्च विशेषणोपलक्षणभेदेन द्विविधो बोध्यः ।

**प्रकाशः**—१ ज्ञानम् । यथा अर्थप्रकाशो बुद्धिः इत्यादौ ( त० भा० ) ( त० प्र० ) । अत्र वैशेषिका आहुः प्रागप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगाज्ज्ञानाख्यः प्रकाशो जायते इति ( सांख्य० प्र० भा० अ० १ सू० १४५ ) । २ तेजः । यथा प्रचुरप्रकाशो रविरित्यादौ । तमोविरोध्याकारो हि प्रकाशशब्दवाच्यः ( सर्व० सं० पृ० ४५७ शां० ) । ३ ज्ञानस्वरूप आत्मा प्रकाशः इति सांख्या आहुः । अत्र सूत्रम् जडप्रकाशयोगात् प्रकाशः इति ( सांख्य० सू० अ० १ सू० १४५ ) । अस्मिन्मते प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वनुगतमखण्डोपाधिः अनुगत-

व्यवहारात् इति ज्ञेयम् ( सांख्य० प्र० भा० अ० १ सू० १४५ ) । ४ व्यवहारशास्त्रज्ञास्तु सर्वजनज्ञानविषयः । यथा प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः ( वीरमित्रो० २ पृ० ५८६ स्मृतिः ) इत्यादौ इत्याहुः । ५ सर्वश्राव्यं वाक्यं प्रकाशम् इति नाटकज्ञा आहुः ।

**प्रकीर्णम्**—१ ग्रन्थविच्छेदः । २ विशकलिततया विद्यमानत्वम् । यथा प्रकीर्णवादस्यायुक्तत्वात् ( त० दी० पृ० ३३ ) इत्यादौ । ३ विभिन्नजातीयानां मिश्रणम् ( वाच० ) । यथा भट्टिकाव्ये नानाजातीयप्रत्ययोदाहरणबोधककाण्डम् । ४ विक्षेपः । ५ धर्मज्ञास्तु अनुक्तप्रायश्चित्तविशेषको पापभेदः । अत्रोक्तम् अनुक्तं तत्प्रकीर्णकम् इति ( स्मृतिः ) ( वाच० ) । यथा प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम् । प्रायश्चित्तं बुधः कुर्याद्ब्राह्मणानुमतः सदा ॥ ( विष्णु० ) इत्यादौ इत्याहुः ।

**प्रकृतत्वम्**—[ क ] प्रतिज्ञाविषयत्वम् ( न्या० र० सामान्यनि० पृ० १० ) । यथा एवम् दुष्टहेतुनिरूपणस्याप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया ( ग० हेत्वा० पृ० २ ) इत्यादौ । यथा वा प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताघटिते हेत्वाभासलक्षणे ह्रदो वह्निमान् धूमादित्यत्र पक्षतावच्छेदकीभूतह्रदत्वस्य साध्यतावच्छेदकीभूतवह्नित्वस्य च प्रकृतत्वम् । [ ख ] उद्देश्यत्वम् ( म० प्र० ४ पृ० ५६ ) । यथा प्रकृतान्वयबोधसमानाकारस्वजन्यान्वयबोधविरह आकाङ्क्षा इत्यादौ ( न्या० म० ४ पृ० २२ ) । [ ग ] वर्तमानकाले गृहीतत्वम् । [ घ ] प्रकरणप्राप्तत्वम् । [ ङ ] आरब्धत्वं इति केचिदाहुः । [ च ] अधिकृतत्वम् ( वाच० ) ।

**प्रकृतिः**—१ ( शब्दः ) [ क ] स्वेतरशब्दार्थाविशेषितस्य यादृशस्वार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्ताया निश्चय एव हेतुः तादृशस्तथाविधार्थे प्रकृतिः । यथा पटभूप्रभृतयो हि शब्दाः स्वोत्तरविभक्त्याद्यंशे निश्चिता एव स्वोपस्थाप्यस्य वसनजननादेरन्वयं प्रत्ययार्थे कर्मत्वकर्तृत्वादौ बोधयन्ति न त्वन्यथा ( अनिश्चिता अपि ) । अत्रेदं बोध्यम् । चैत्रः पचति यजेत इत्यादौ शब्दान्तरधर्मिकसुबादि-

निश्चयस्यासत्त्वेपि तदर्थस्यैकत्ववर्तमानत्वादेश्चैत्रपाकादावन्वयात् स्वाव्यवहितोत्तरत्वसंसर्गेण तादृशशब्दवत्ताया निश्चय एव तदुपस्थाप्यया दृशान्वयबोधं प्रति हेतुः तादृशस्यैव च शब्दस्य प्रकृते तथाविधः स्वार्थः । स च पाकेत्यादेः शक्त्यादिविरहेपि पचनादिरूपः सुवच एव । पचनादेः कर्मत्वादावन्वयबोधं प्रति अमादिधर्मिकतादृशशब्दवत्ताया निश्चयस्यैव हेतुत्वात् लक्षणसमन्वयः । प्रत्ययास्तु पदान्तरार्थानवच्छिन्नस्य संख्या काल इष्टसाधनत्व इत्यादिस्वार्थस्यान्वयबोधं प्रत्यनिश्चिता अप्युपयुज्यन्ते इति तत्र नातिव्याप्तिः (श० प्र० श्लो० ६ टी० पृ० ८)। [ख] स्वोपस्थाप्ययादृशार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वम् तादृश एव शब्दस्तथाविधार्थे प्रकृतिः। बहुगुडो द्राक्षेत्यादौ बहुजाद्यर्थस्यान्वयबोधं प्रति न गुडादिपदधर्मिकबहुजादिनिश्चयत्वेन हेतुत्वम् । अपि तु सुबादिधर्मिकबहुगुडादिपदनिश्चयत्वेन । अन्यथा केवलादपि बहुगुडादिपदाद्द्राक्षादौ बहुजाद्यर्थस्यान्वयबोधापत्तेः इति न तत्र प्रसङ्गः (श० प्र० श्लो० ७ टी० पृ० ९-१०)। [ग] शाब्दिकास्तु पाणिनिप्रभृतयः प्रातिपदिकं प्रकृतिः इत्याहुः (श० प्र० श्लो० १३ टी० पृ० १५)। [घ] नव्यशाब्दिकाः नागोजीभट्टादयस्तु अर्थावबोधहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः इत्याहुः। अत्रावधित्वं च पूर्वापरत्वरूपं ग्राह्यम् । तेन बहुगुडो द्राक्षेत्यत्र बहुजादेर्निमित्तप्रकृतौ नाप्रसङ्गः। वस्तुतस्तु बहुगुडो द्राक्षेत्यत्र प्रकृतिप्रत्ययविभाग एव नास्ति इति भाष्यकारमतमित्यन्यत् । अत्रार्थे व्युत्पत्तिः । प्रकरोति प्रत्ययं बोधं च इति प्रकृतिशब्दो योगरूढः (वाच०)। अत्र प्रकृतित्वं च प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वम् (शेखर०)। प्रत्ययविधानावधित्वम् वा (ल० म०)। अथवा तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तद्विधानावधिभूतत्वम् । इयं प्रकृतिर्द्विविधा । नाम धातुश्चेति (श० प्र० श्लो० १३)। २ कारणम् यथा मृत्पिण्डाद्घटो जायत इत्यादौ मृत्पिण्डः प्रकृतिः (ग० व्यु० का० ५ पृ० १०८)। अत्र जनिकर्तुः प्रकृतिः (पा० सू० १।४।३०) इत्यनेनापादानत्वम् । न

चात्र हेतुपञ्चमी। गुणातिरिक्तहेतौ पञ्चम्यनुशासनविरहात् (ग० व्यु० का० ५ पृ० १०८)। अत्र गुणत्वं च स्वप्रयोज्याश्रयवृत्तित्वम्। तेन वह्निमान् धूमादित्यादौ धूमस्य गुणत्वप्राप्त्या विभाषा गुणेऽस्त्रियाम्[1] (पा० सू० २।३।२५) इत्यनेन धूमपदात्तृतीयापञ्चम्यौ संगच्छेते (ग० अवय० हेतु०)। अत्र समवायि असमवायि निमित्त एतत्रितय-साधारणं कारणत्वम्। न तु समवायिकारणत्वमात्रं विज्ञेयम्। तेन दण्डाद्घटो जायत इति प्रयोग इष्यते। अत एव यतो द्रव्यं गुणाः कर्म इत्यादौ पञ्चमी (ग० व्यु० का० ५ पृ० १०८)। यतः ईश्वरात्। अथ वा केवलं समवायिकारणम् (वै० वि०) (वै० उ० ८।२।५)। यथा पृथिवी गन्धज्ञाने[2] (घ्राणे) प्रकृतिः (वै० सू० ८।२।५) इत्यादौ। अथवा स्वजनकनाशप्रतियोगि। यथा दुग्धं दध्नः प्रकृतिः (राम० १ पृथिवी० पृ० ६८)। यथा वा महापटः खण्डपटस्य प्रकृतिः (मु० १ पृथिवी०)। स्वजनकेत्यस्यार्थश्च स्वम् दधि। तस्य जनको यो नाशः दुग्धनाशः तस्य प्रतियोगि दुग्धम् तत्त्वं दुग्धे इति। एवम् खण्डपटस्य जनकीभूतो नाशः महापटनाशः तत्प्रतियोगित्वं महापटादौ इति द्रष्टव्यम्। ३ यावदाश्रयभाविधर्मः। यथा प्रकृत्या कृपणः स्वभावेन सरलः इत्यादौ। अत्र तृतीयार्थश्चाभेदस्तादात्म्यं वा। एवं च स्वाश्रयाधिकरणयावत्कालवृत्तिकार्पण्यवान् इत्याकारस्तत्र बोधः। अत्र प्रकृत्यादिभ्य उपसंख्यानम् (वार्तिकम्) इत्यनेन तृतीया विधीयते (श० प्र० श्लो० ९३ टी० पृ० १२४)। ४ स्वभावः। ५ मीमांसकास्तु यत्र समग्राङ्गोपदेशः सा प्रकृतिः। यथा दर्शपूर्णमासादिरूपप्रधानयागः प्रकृतिः (इष्टयग्निहोत्रसोमाः प्रकृतयः) (लौ० भा० पृ० २३) इत्याहुः। अत्रेदं बोध्यम्। यत्र कर्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते सा प्रकृतिः। यत्र विशेषरूपमेव कर्तव्यं श्रुत्योपदिश्यते इतरत्सर्वं कर्मान्तरादतिदिश्यते सा विकृतिः (वाच०)। तत्रापि मूलप्रकृतिः अवान्तरप्रकृतिः इति प्रकृतेर्द्वैविध्यादिकं तु विस्तरभयान्नोच्यते इति।

---

१ अस्त्रियामिति पदच्छेदः। २ गन्धो ज्ञायते अनेन तत्। घ्राणेन्द्रियमित्यर्थः।

६ सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः ( सां० सू० अ० १ सू० ६१ ) इति सांख्या आहुः । अयमर्थः । प्रकृतेः कार्यं महत्तत्त्वम् । महतश्च कार्योहंकारः । अहंकारस्य कार्यद्वयम् तन्मात्राणि उभयमिन्द्रियं च । तत्रोभयमिन्द्रियं बाह्याभ्यन्तरभेदेनैकादशविधम् । तन्मात्राणां कार्याणि च पञ्च स्थूलभूतानि । स्थूलशब्दात्तन्मात्राणां सूक्ष्मभूतत्वमभ्युपगतम् । पुरुषस्तु कार्यकारणविलक्षणः इति । इत्येवं पञ्चविंशतिर्गणः पदार्थव्यूहः । एतदतिरिक्तः पदार्थो नास्तीत्यर्थः । दिक्कालौ चाकाशमेव इति ( सांख्य० प्र० भा० अ० १ सू० ६१ टी० ) । एतन्मते प्रकृतित्वं च तत्त्वान्तरोपादानत्वम् ( सर्व० पृ० ३१८ सांख्य० ) । ७ माया अविद्या चेति द्विविधभेदभिन्ना प्रकृतिः इति शांकरा अद्वैतवादिनो मन्यन्ते । ८ जडात्मको भगवदंशविशेषः इति वाल्लभा आहुः । ९ लक्ष्मीरपीति श्रीमध्वाचार्यानुयायिनः प्राहुः । एतन्मते च प्रकृतिर्द्विविधा चित्प्रकृतिः जडप्रकृतिश्च । तत्राद्या लक्ष्मीः । द्वितीया तु मृत्पाषाणादिस्थावरात्मकं सर्वं जगत् इति विज्ञेयम् ( भाग० १ टी० विजयध्व० ) । अत्र लक्ष्मीपदेन भगवदिच्छा संगृह्यते ( मध्व० भाष्य० १।४।२५ ) । १० शरीरावस्था इति भिषजो वदन्ति । ११ मूलस्वरः प्रकृतिः इति गायका गायन्ति । १२ शाक्तास्तु प्रकृत्यंशदेवीपञ्चकरूपशक्तिविशेषः इत्याहुः । अत्रोक्तम् गणेशजननी दुर्गा १ राधा २ लक्ष्मीः ३ सरस्वती ४ । सावित्री ५ च सृष्टिविधौ प्रकृतिः पञ्चमी स्मृता ॥ इति । १३ प्रकृतिशब्दवाच्यो विष्णुः इति श्रीपूर्णप्रज्ञाचार्या व्याचक्रुः ( मध्वभा० ) । अत्र ब्रह्मसूत्रम् ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ इति ( ब्र० सू० १।४।२४ ) । प्रकृतिः प्रकृष्टकरणात् ( सर्व० सं० पृ० १४१ पूर्णप्र० ) । अत्र प्रकृतिशब्देन समवायिकारणं (ब्रह्म) ग्राह्यम् इत्यद्वैतिनो मायावादिनो मन्यन्ते । १४ स्वाम्यमात्यादिराज्याङ्गं प्रकृतिः इति नीतिशास्त्रज्ञा आहुः । अत्रोच्यते । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि ७ प्रकृतयः पौराणां श्रेणयोपि च ॥ इति ( अमरः काण्ड० २ क्षत्रि० श्लो० १७–१८ ) । १५ एकविंशत्यक्षरपाद-

कश्छन्दोविशेषः प्रकृतिः इति छन्दःशास्त्रज्ञा आहुः । १६ व्याकरणशास्त्रोक्तकर्मविशेषः (विकार्यम्) । यथा काशान्कटं करोति इत्यादौ काशादि प्रकृतिकर्म इति ।

**प्रकृतिविकृतिः**—महदाद्याः प्रकृतिविकृतयः सप्त इति । अस्यार्थः । प्रकृतयश्च ता विकृतयश्चेति प्रकृतिविकृतयः सप्त महदादीनि तत्त्वानि (सर्व० सं० पृ० ३१७ सांख्य० ) ।

**प्रक्रिया**—१ निरूपणम् (दि० गु० पृ० १९८) । यथा नवक्षणा प्रक्रिया दशक्षणा प्रक्रिया एकादशक्षणा प्रक्रिया (मु० गु० पृ० १९८) इत्यादौ । २ पक्षप्रतिपक्षयोः प्रवृत्तिः । यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवत् इत्येकः पक्षं प्रवर्तयति । द्वितीयश्च नित्यसाधर्म्यात् श्रावणत्वात् नित्यः शब्दः इति (वात्स्या० ५।१।१६) । अत्रार्थे व्युत्पत्तिः । प्रक्रिया प्रकर्षेण क्रिया साधनम् । विपरीतसाधनमिति फलितार्थः इति (गौ० वृ० ५।१।१६) । ३ शब्दप्रयोगसाधनावस्था प्रक्रिया इति शाब्दिका आहुः । ४ प्रकरणम् सा प्रक्रिया या कम् इत्यपेक्षा इति पार्थसारथिमिश्र आह । ५ अधिकारः । ६ नृपादीनां चामरव्यजनच्छत्रधारणादिव्यापारः इति काव्यज्ञा आहुः ।

**प्रचयः**—१ [क] शिथिलाख्यः संयोगः । यथा यत्र द्वाभ्यां तूलकपिण्डाभ्यां प्रचययुक्ताभ्यां तूलकपिण्डान्तरमारब्धम् तत्र परिमाणोत्कर्षदर्शनात् शिथिलाख्यसंयोगरूपः प्रचयस्तादृशावयविपरिमाणस्यासमवायिकारणम् (वै० वि० ७।१।९) (वै० उ० ७।१।९) (भा० प० गु० श्लो० ११३) । अत्र प्रचयश्चारम्भकः संयोगः । स च स्वाभिमुखकिंचिदवयवासंयुक्तत्वे सति स्वाभिमुखकिंचिदवयवसंयोगलक्षणः । स त्ववयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनकः । गुणकर्मारम्भे सापेक्षः इति वचनात् (वै० उ० ७।१।९) (त० व०) । [ख] किंचिदवयवावच्छेदेनावयवान्तरासंयोगिनि महत्यवयवे वर्तमानः संयोगः इत्येके वदन्ति । अन्य आहुः । अत्र महत्पदं न देयम् । परमाणुसंयोगस्य प्रचयत्वे क्षतिविरहात् इति । अपरे तु भूयोवयवावच्छेदेना-

वयवान्तरासंयोगिन्यवयवे वर्तमानः संयोगः प्रचयः। तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा न प्रचयः इत्याहुः (दि० गु० पृ० २०५)। २ साहित्यम् (कि० व० ५)। ३ चयनम्। यष्ट्यादिना वृक्षाग्रस्थानां पुष्पाणां प्रचयः इत्येव (सि० कौ० कृद० पृ० ३४२)। अत्र व्याकरणनियमः। हस्तादाने चेरस्तेये (पा० सू० ३।३।४०)। हस्तादाने तु घञ्। हस्तेन पुष्पप्रचाय इत्येव। चौर्ये तु अच्। प्रचय इत्येव। चौर्येण पुष्पादेः प्रचयः इति। ४ समूहः। ५ उपचय इति काव्यज्ञा आहुः। ६ उदात्तानुदात्तस्वरितेभ्यो व्यतिरिक्तश्चतुर्थः स्वर एकश्रुतिः। तां चाध्यापकाः प्रचयः इत्याचक्षते (जै० न्या० अ० ९ पा० २ अधि० ९)।

**प्रज्ञाज्योतिः**—भूतेन्द्रियजयी योगिविशेषः (सर्व० सं० पृ० ३८४ पात०)।

**प्रज्ञापनम्**—१ उदाहरणम्। एतदर्थे वात्स्यायनभाष्यं (१।२।७) द्रष्टव्यम्। २ बोधनम्।

**प्रणतिः**—<br>**प्रणामः**— } (नमस्कारः) स्वापकर्षबोधकः करशिरःसंयोगादिव्यापारः। यथा पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा। वचसा मनसा चैव प्रणामोष्टाङ्ग उच्यते॥ इति। बाहुभ्यां चैव जानुभ्यां शिरसा वचसा दृशा। पञ्चाङ्गोयं प्रणामः स्यात्पूजासु प्रवरः स्मृतः॥ इत्यादौ च (वाच०)।

**प्रणिधानम्**—१ सुस्मूर्षया (स्मर्तुमिच्छया) मनसो धारणम् (वात्स्या० ३।२।४२)। २ मनसो विषयान्तरसंचारवारणम् (गौ० वृ० ३।२।४२)। इदं च स्मृतेरुद्बोधकरूपं निमित्तं बोध्यम्। अत्र भाष्यम् सुस्मूर्षितलिङ्गचिन्तनं चार्थस्मृतिकारणम् इति (वात्स्या० ३।२।४२)। ३ योगिनस्तु चिन्तनविशेषरूपः समाधिविशेषः इत्याहुः। ४ भक्तिविशेषः (पात० यो० सू० १।२३)। ५ अर्पणम्। ६ कर्मणां फलत्यागः (पात० यो० सू० २।१)। ७ प्रयत्नः। ८ अभिनिवेशः इति काव्यज्ञा आहुः।

**प्रतानः**—प्रतानाः काण्डप्ररोहरहिताः सरलयायिन्यः सारिवाप्रभृतयः (मिताक्षरा अ० २।२२९)।

**प्रति**—(अव्ययम्) १ सादृश्यम्। यथा प्रतिदेवता इत्यादौ। २ आदानम्। यथा प्रतिगृह्णाति इत्यादौ। ३ हिंसा। यथा प्रतिहन्ति इत्यादौ। ४ अङ्गीकारः। यथा प्रतिज्ञानम् इत्यादौ। ५ प्रतिनिधीकरणम्। यथा अभिमन्युरर्जुनतः प्रति इत्यादौ। ६ व्याधिः। यथा प्रतिश्यायः इत्यादौ। ७ आभिमुख्यम्। यथा प्रतिसूर्यं गतः इत्यादौ। ८ व्याप्तिः। यथा प्रतिकीर्णं पांशुभिः इत्यादौ। ९ वारणम्। यथा प्रतिषिद्धः इत्यादौ (गण० टीका०) (वाच०)। १० प्रतिदानम्। यथा तिलेभ्यः प्रतियच्छति माषान् इत्यादौ। ११ लक्षणम्। यथा वृक्षं प्रति विद्योतते विद्युत् इत्यादौ। अत्र प्रतेः सादृश्याद्यर्थविशेषेषु द्योतकत्वमेव न तु वाचकत्वम् इति ज्ञेयम्।

**प्रतिकूलत्वम्**—१ द्वेषविषयत्वम् (मु० गु० पृ० २२०)। यथा दुःखस्य द्विष्टत्वरूपं प्रतिकूलत्वम्। २ विरुद्धपक्षावलम्बित्वम् इति काव्यज्ञा आहुः।

**प्रतिग्रहः**—[क] स्वस्वत्वजनकेच्छारूपस्वीकारविशेषः। यथा धनं प्रतिगृह्णातीत्यादौ धात्वर्थः। अत्र स्वस्वत्वरूपफले द्वितीयार्थाधेयत्वान्वयः (ग० व्यु० का० २ पृ० ४३)। अत्र मतविशेषो ज्ञेयः। दानस्यैव स्वस्वत्वध्वंसमिव परस्वत्वोत्पत्तिं प्रति जनकता। प्रतिग्रहस्य तु न स्वत्वजनकता। अपि तु दानेनोत्पन्नमपि स्वत्वं संप्रदानव्यापारेण प्रतिग्रहेण यथेष्टविनियोगार्हं क्रियते इति जीमूतवाहनमतम् (जीमूतवा० दायभाग० वीरमित्रो० २ पृ० ५४३)। अत्र प्रमाणम् मनसा पात्रमुद्दिश्य इत्यादि शास्त्रम्। अयं भावः। प्रतिग्रहस्य स्वत्वजनकत्वं यदि स्वीक्रियेत तदा देशान्तरस्थं पात्रमुद्दिश्य यद्धनं ददाति तत्पात्रमरणानन्तरं तत्पुत्राणां तद्धने तत्पितृस्वत्वानुत्पत्त्या स्वत्वाभावेन प्रवृत्तिर्न स्यात्। अतः प्रतिग्रहस्यापि स्वत्वजनकत्वं नाङ्गीकर्तव्यम् इति। विदेशस्थं पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणस्थले पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते। अन्यथा तैरिवोदासीनैरपि तद्धनस्यारण्य-

कुशादेरिवोपादाने यथेष्टविनियोगे च प्रत्यवायो न स्यात् इति (श० प्र० श्लो० ६९ टी० पृ० ८५) । वीरमित्रोदयकारास्तु प्रतिग्रहादेव स्वत्वमुत्पद्यते । अन्यथा पात्रविशेषोद्देशेन त्यागे तेनास्वीकृतेपि तत्स्वत्वोत्पत्तौ परस्मै तस्य प्रतिपादनासंभवप्रसङ्गः इत्याहुः ( वीरमित्रो० २ दाय० पृ० ५४२ ) । [ ख ] पुण्यार्थकदानजन्यस्वत्वस्य जनकः स्वीकारः । ममेदम् इति ज्ञानमिति यावत् । यथा धनं प्रतिगृह्णातीत्यत्र । अत्र फलीभूतस्वत्ववत्तया धनस्य कर्मत्वं संगच्छते । विक्रयादेर्दानविशेषत्वेपि न तस्य पुण्यजनकत्वम् । अतस्तल्लुब्धस्य स्वीकारो न प्रतिग्रहः इति विज्ञेयम् (श० प्र० श्लो० ७२ पृ० १०९ ) । प्रतिग्रहस्य स्वत्वजनकत्वे प्रमाणं श्रुतिः याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत् इति । स्मृतिरपि ब्राह्मणस्याधिकं लब्धम् ( गौतमः ) इति । तदर्थश्च मिताक्षरायाम् ( अ० २ व्यव० श्लो० ११४ ) ब्राह्मणस्य प्रतिग्रहादिना लब्धम् तत् अधिकमसाधारणम् ( वीरमित्रो० २ पृ० ५४३ ) इति । [ ग ] दत्तद्रव्यस्वस्वत्वजनकस्वीकारः । यथा गां प्रतिगृह्णातीत्यादौ ( का० व्या० पृ० ५ ) । [ घ ] शाब्दिकास्तु अदृष्टार्थदत्तस्वीकारः ( ल० म० ) इत्याहुः । अयाचितविषये प्रतिग्रहे न दोषः । तदुक्तम् अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे । अमृतं तं विदुर्देवास्तस्मात्तन्नैव निर्णुदेत् ॥ इति (गारुडे० अ० २१५) ( वाच० ) । अदृष्टार्थत्यक्तद्रव्यस्वीकारः इत्यन्ये ।

**प्रतिघातः**—१ बलवत्तरवेगप्रयुक्तद्रव्यसंयोगविशेषः । २ मारणम् ।

**प्रतिज्ञा**—१ [ क ] स्वकर्तव्यत्वेन निर्देशः ( राम० ) । कर्तव्यत्वप्रकारकबोधानुकूलव्यापारः इति परमार्थः । यथा अथ हेत्वाभासास्तत्त्वनिर्णयप्रयोजकत्वान्निरूप्यन्ते इति मया तर्कसंग्रहः क्रियते इत्यादि च प्रतिज्ञा । [ ख ] कर्तव्यत्वज्ञानम् ( राम० पृ० २ ) । यथा कारिकावलीं विशदीकरवाणि इति प्रतिज्ञा । २ व्यवहारज्ञास्तु पक्षाभिधायकः पूर्वपक्षभाषाद्यपरपर्यायो वाक्यविशेषः प्रतिज्ञा । स च वाक्यविशेषः व्यवहारपादविशेषः पूर्वपादः अर्थिपादश्चेत्यभिधीयते ( वीरमित्रो० २ व्यव० पृ० ६० ) । यथा ममेदं द्रव्यमनेन गृहीतं न ददाति इत्यादिः प्रतिज्ञा इत्याहुः ।

भाषा प्रतिज्ञा पक्ष इति नार्थान्तरम् (मिताक्षरा अ० २ श्लो० ६) ।
भाषाशब्दे दृश्यम् । अत्र प्रतिज्ञालक्षणमाह याज्ञवल्क्यः । प्रत्यर्थिनोऽग्रतो
लेख्यं यथावेदितमर्थिना । समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥
इति (वीरमि० २ पृ० ६१) । ३ अङ्गीकारः इति काव्यज्ञा आहुः ।
४ न्यायावयवः । यथा पर्वतो वह्निमान् इति प्रतिज्ञावाक्यम् । पक्षज्ञानं
प्रतिज्ञायाः प्रयोजनम् (त० दी० २ पृ० २२) । लक्षणं च प्रतिज्ञा-
त्वमेव । तच्चात्र हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वम् । लिङ्गाविषय-
कलिङ्गिविषयकज्ञानजनकन्यायावयवत्वं (चि० २ अव० पृ० ७७) वा ।
इतरान्वितस्वार्थबोधकत्वे सति स्वीयं यदन्त्यभिन्नं पदं तदर्थविशेष्यका-
न्वयबोधजनकत्वे सति न्यायावयवत्वं वा । अथवा अन्त्यपदवत्त्वे सति
स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनकान्यत्वे सति न्यायावयवत्वम्
(दीधि० २ पृ० १७७) । यद्वा एतन्न्यायघटकः पर्वतो वह्निमान् इति
यः शब्दः तद्वृत्त्यवयवविभाजको पाधिमत्त्वम् (न्या० म० २ पृ० २३) ।
प्रतिज्ञात्वं जातिः इति केचिदाहुः (चि० २ अव० पृ० ७७) ।
वस्तुतस्तु प्रतिज्ञात्वमखण्डोपाधिरेव इत्यन्ये आहुः (म० प्र० २
पृ० ३३) । प्रतिज्ञावाक्यं च उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजक-
शाब्दज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं
वाक्यम् । सत्यन्तस्य प्रकृतन्यायावयवत्वं पर्यवसितार्थः । तेन प्रकृत-
न्यायबहिर्भूतवाक्यवारणम् (दीधि० २ अवय० पृ० १६७) । एव-
मग्रेपि बोध्यम् । अथवा उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञान-
जनकत्वे सत्युद्देश्यानुमितिविषयकलिङ्गाविषयकशाब्दज्ञानजनकं वाक्यम्
(चि० २ अवय० पृ० ७७) । सा च प्रतिज्ञा [क] साध्यनिर्देशः
प्रतिज्ञा (गौ० १।१।३३) । प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य
परिग्रहवचनं प्रतिज्ञा । साध्यनिर्देशः अनित्यः शब्दः इति (वात्स्या०
१।१।३३) । साधनीयस्य अर्थस्य यो निर्देशः स प्रतिज्ञा । तथा च
पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधको न्याया-
वयवः इत्यर्थः । साधनीयश्च वह्निमत्त्वादिना पर्वतादिः (गौ०

सू० १।१।३३ ) ( दीधि० २ अव० पृ० १६७ ) । [ ख ] साध्य-धर्मविशिष्टधर्मिप्रतिपादकं वचनम् ( त० भा० पृ० ४३ ) ( त० दी० २ पृ० २२ ) । यथा पर्वतपक्षकवह्निसाध्यकस्थले पर्वतो वह्निमान् इति वाक्यं प्रतिज्ञा । साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकबोधजनको न्यायावयवः इत्यर्थः ( नील० २ पृ० २२ ) ( दीधि० ) । अत्र निगमनवारणाय च साध्यांशे साध्यतावच्छेदकातिरिक्ताप्रकारकत्वं वाच्यम् । तदर्थश्च साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वम् । तेन प्रमेयवतः साध्यत्वे नासिद्धिः । उदासीनवारणाय च न्यायान्तर्गतत्वे सति इति विशेषणीयम् । न्यायान्तर्गतत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वं तत् । प्रतिज्ञात्वावयवत्वादिकं परिभाषाविशेषविषयत्वरूपम् तत्तद्व्यक्तित्वरूपं च ( गौ० वृ० १।१।३३ ) । उदाहरणाच्च न पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यज्ञानम् । उपनयाच्च न पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानम् इति तयोर्व्युदासः ( दीधि० २ अवय० पृ० १६७ ) । [ ग ] अनुमेयोद्देशः अविरोधी प्रतिज्ञा । प्रतिपिपादयिषितधर्मविशिष्टस्य धर्मिणोपदेशविषयापादनार्थमुद्देशमात्रम् । यथा द्रव्यं वायुः इति । अविरोधिग्रहणात् प्रत्यक्षानुमानागमस्वशास्त्रस्ववचनविरोधिनो निरस्ता भवन्ति । यथा अनुष्णोग्निः इति प्रत्यक्षविरोधी । घनमम्बरम् इत्यनुमानविरोधी । ब्राह्मणेन सुरा पेया इत्यागमविरोधी । वैशेषिकस्य सत्कार्यम् इति ब्रुवतः स्वशास्त्रविरोधी । न शब्दोर्थप्रत्यायकः इति स्ववचनविरोधी ( प्रशस्त० २ पृ० २८ ) ।

**प्रतिज्ञान्तरम्**—( निग्रहस्थानम् ) [ क ] प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ( गौ० ५।२।३ ) । प्रतिज्ञातार्थः अनित्यः शब्दः ऐन्द्रियकत्वाद्घटवदित्युक्ते योस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः सामान्यमैन्द्रियकं नित्यम् इति । तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे । धर्मविकल्पादिति । दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात्सामान्य-

